अथवा – शरीरेन्द्रियान्तःकरणादिसन्निधानेन स्वात्मनो विविधदुःखं पश्यन्निष्कण्टकं च सुखमलभमानोऽयं संशेते किमिदं दुःखादिकं शरीरादिसम्बन्धनिमित्तमेव, उत स्वाभाविकमिति । तं प्रति वेदः प्रवर्तते **'अतत्त्वमसि'** इत्यादिः[१] । [२]निर्दुःखानन्दस्वभावः स एव, न त्वमसि, किन्त्वीश्वराधीनाविद्याद्युपस्थापितशरीरादिनिमित्तेनान्यथारूपेणोपेत[३] इति । [४]अथ पुनरसौ जिज्ञासते केनोपायेनाहमिदमस्वाभाविकं रूपं हित्वा स्वरूपेणावस्थितः स्यामिति । तं प्रति परमेश्वर एव प्रसन्नस्तदुपाय इति तत्स्वरूपं निरूप्यते वेदेन । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारः तदर्थं श्रवणादिकं, तदङ्गतया कर्मादिकं च विधीयते – इत्येवं समस्तस्यापि वेदस्य परमेश्वरस्वरूप एव पर्यवसानमिति ॥

सत्तर्कदीपावलीरीत्या भाष्यस्य योजनान्तरं तु – एवमपि ईळे आयाहीत्यादीनामर्थान्तरपरत्वेऽप्यग्निवाय्वादिशब्दानां यदा भगवद्वाचित्वं तदा पृथक्स्थितस्यैव **'अग्निमीळे' 'वायवायाहि'** इत्यादिवाक्यस्यापि परमात्मनाऽन्वयो युज्यते, न केवलं पदाक्षरादेः । यदा तु तेषाम् अग्निवाय्वादिवाचित्वं[५] तदा पृथक्स्थितस्यैव वाक्यस्यापि परमात्मनाऽन्वयो युज्यत इति । अस्मिन् पक्षे अपृथक्पृथगिति भाष्ये पदच्छेदः ॥

तत्त्वप्रदीपरीत्या योजनान्तरम् - एवमन्यस्यापि वाच्यत्वाङ्गीकारे यद्यपि पदानामेकैकशो नान्वयः परमात्मना । तथाऽपि वाक्यस्यान्वयो युज्यते ।

---

१. 'इत्यादि' – प.
२. **'परमात्मैव निर्दुःखानन्द-'** प.
३. **'अन्यरूपेणोपेतः'** – प.
४. **'अतः पुनरसौ'** – प.
५. **'अग्निवाय्वादिपरत्वं'** – प.

पृथक्पृथक्स्थितस्यापि [1]स्वं स्वमवान्तरार्थमुक्त्वा स्थितस्य[2] परिपूर्णस्याप्यपूर्णफलत्वान्मिश्रफलत्वाच्चापरकर्मोत्पत्त्यादिना[3] पारतन्त्र्याद् देवादिप्रपञ्चोऽप्यप्रधानः । तस्मात् सर्वतः परत्वेनाऽत्मविज्ञानं कर्तव्यमिति वाक्यान्वय इति । अस्मिन् पक्ष अपिशब्दौ यद्यपितथापीत्यर्थौ ॥

न च परमात्मज्ञानस्यैव प्रयोजनत्वात् तस्य च पदवृत्त्यैव सम्भवात् किं वाक्यान्वयेनापीति वाच्यम् । तस्योत्तमाधिकारिव्यतिरिक्ताधिकारिणः[4] प्रति सार्थकत्वात् । अन्यथाऽन्यत्र समाकर्षेण वाक्यान्वयं विना प्रतिपदं प्रत्यक्षरं च वेदानां ब्रह्ममात्रपरत्वे **'कश्छन्दसाम्'** (ऋ.१०.११४.९) इति श्रुतेः पदसमन्वयेऽनधिकारिणामुत्तमेतराधिकारिणां वेदाद् ब्रह्मज्ञानस्यैवासम्भवेन तज्जिज्ञासायां विमुखत्वप्रसङ्गात् ॥

## सू - ॐ ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ ॐ॥ २१ ॥

**'नान्यः पन्था अयनाय विद्यते'** *(तै.आ.३.१२.७)*
**इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः ।**
**यस्मादेवमनित्यफलमन्यत् तस्मान्नान्यः पन्था इति ॥ २१ ॥**

यदन्यवचनस्यापि परमात्मज्ञानार्थत्वमुक्तं तत् केन प्रकारेणेत्याकाङ्क्षायां तत्प्रदर्शनाय सूत्रमुपन्यस्य व्याचष्टे – **प्रतिज्ञेति** ॥ सिद्धेरिति पञ्चमी । वेदेन मन्यत इति शेषः । इतिशब्दोऽध्याहार्य इति सूचनाय इतीत्युक्तिः । तथा च **'नान्यः पन्थाः'** इत्यनेन प्रतिज्ञातस्य ज्ञानमेव मोक्षसाधनं नान्यदित्यर्थस्य

---

१. **'स्वस्वमवान्तरार्थम्'** – प.
२. **'पृथक् परिपूर्णस्य'** – प.
३. **'अपरं कर्मोत्पत्त्यादिना'** – प.
४. **'-धिकारिणं'** – प.

**'सिद्धेः'** सिद्धिमपेक्ष्य तदर्थं तत्र **'लिङ्गत्वेन'** कुतो ज्ञानमेव मोक्षसाधनं नान्यदित्याकाङ्क्षायां हेतुत्वेन सविस्तरं सपरिकरं कर्मादिकमुच्यते वेदेनेत्याश्मरथ्याचार्यो मन्यत इति योजना ॥

कर्मादिकमुच्यते इत्यनेनात्रापि जगद्वाचित्वमनुषञ्जनीयमिति सूचितम् । कथमुक्तप्रतिज्ञायां कर्मादिवचनं हेतुरित्यत आह – **यस्मादिति ॥** एवमित्यनेन सूत्रे **'अपि चैवम्'** इत्यतः श्रुत्युक्तप्रकारपरामर्शकम्[1] एवमिति पदमनुवर्तनीयमिति सूचितम् । तथा च यस्मादेवम् **'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुः'** इत्याद्युक्तप्रकारेण अन्यत् कर्माद्यनित्यफलं विनाशि दुःखसम्भिन्नफलकं तस्मान्न तन्मोक्षसाधनम्, मोक्षस्य दुःखासम्भिन्ननित्यसुखरूपत्वात् । यत एवमतोऽपरोक्षज्ञानान्नान्यः पन्थाः मोक्षायेति प्रतिज्ञासिद्धेर्लिङ्गत्वेन वेदेन कर्मादिकमुच्यत इति एवंशब्दावृत्त्या योजना । न चानेन न प्रकारो दर्शित इति वाच्यम् । क्षुद्रफलार्थिनं प्रति तत्तत्फलाय तत्तत्कर्म विदधतोऽपि कर्मादिवाक्यस्य मुमुक्षुं प्रति कर्मणां क्षुद्रफलकत्वात् तद्धानेनाक्षुद्रफलकं ज्ञानमेवोपादेयमिति वैराग्यजनकत्वेन प्रकारेण परमात्मज्ञानार्थत्वमित्युक्त्या प्रकारस्य दर्शितत्वात् ॥

अनेन – यस्मादेवं श्रुत्युक्तप्रकारेणान्यत् कर्माद्येवमनित्यफलमिति सिद्धम्, तस्मान्न तन्मोक्षसाधनम्, तस्य नित्यपुमर्थरूपत्वात् । यत एवमतो मोक्षस्य ज्ञानान्नान्यः[2] पन्था इत्येवं रूपेण कर्मादिवचनं मुमुक्षुं प्रति वैराग्यजननद्वारा नान्यः पन्था इति प्रतिज्ञातार्थसिद्धेर्लिङ्गं हेतुरित्येवं प्रकारेण वेदानां कर्मादिजगद्वाचित्वमित्याश्मरथ्याचार्यो मन्यत इति सूत्रार्थ उक्तो भवति ॥

**'नान्यः पन्थाः'** (तै.आ.३.१२.७) इति श्रुतिस्तु जिज्ञासानये व्याख्याता ॥

---

१. '-प्रकारप्रदर्शकम्'–प. २.'न ज्ञानादन्यः'– प.

**सू – ॐ ॥ उत्क्रमिष्यत**
**एवम्भावादित्यौडुलोमिः ॥ ॐ ॥ २२ ॥**

**उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसाधनत्वेन ।**
**अतस्तद् वक्तीत्यौडुलोमिर्मन्यते ॥ २२ ॥**

प्रकारान्तरेण कर्मादिवचनस्य भगवज्ज्ञानोपयोगं प्रदर्शयत्सूत्रमुपन्यस्य व्याचष्टे –[1]**उत्क्रमिष्यत इति** ॥ कर्तरि षष्ठ्यन्तपदमनूद्य तस्य तत्त्वप्रदीपरीत्या एष्यदुत्क्रमणस्य तदिच्छादशायाम् अभावाल्लक्षणया संसारादुत्क्रमणेच्छोरित्यर्थ इत्यभिप्रायेण मुमुक्षोरित्याह । ज्ञानाद् बन्धमोक्षमिच्छत इति तदर्थः । यद्वा मुमुक्षोरिति विशेष्यपदेनाध्याहृतेन संसारादुत्क्रमिष्यत इति विशेषणपदस्य तात्पर्यार्थमाह । सूत्रे कर्मादिरित्यध्याहाराभिप्रायेण भावादित्येतद् व्याचष्टे - **कर्मादिनेति** ॥ भाव्यमित्यनन्तरं यत इति शेषः ॥

सौत्रैवंशब्दार्थमाह - **साधनसाधनत्वेनेति** ॥ मोक्षस्य साधनं ज्ञानं, [2]तत्साधनत्वेनान्तःकरणशुद्धिद्वारा तदुत्पत्तावुपयोगित्वेनेत्यर्थः । अस्य, भाव्यमित्यनेन सम्बन्धः । सूत्रे जगद्वाचित्वमित्यस्यानुषङ्गमभिप्रेत्याऽह – **अत इति** ॥ मुमुक्षुणा ज्ञानसाधनत्वेन कर्मादिरप्यवश्यं सम्पाद्यत्वादित्यर्थः । तत् कर्मादिकं वक्ति वेदः परमात्मज्ञानार्थमिति वर्तते ।[3]अनेन सूत्रेऽन्यार्थमित्यस्यानुवृत्तिः सूचिता । न च कर्मादेः फलश्रुतिविरोधः, तस्याः कर्मणि रुचिजननार्थत्वात् । **'रोचनार्थं फलश्रुतिः'** इत्यादेरिति भावः ॥

---

१. **'उत्क्रमिष्यत इति ॥ उत्क्रमिष्यत इति कर्तरि'– प.**
२. **'तत्साधनेनान्तःकरण-' – प.**
३. **'तेन सूत्रे नार्थम्' – प.**

अनेन – **'उत्क्रमिष्यतः'** मुमुक्षोः **'एवं'** ज्ञानस्येव कर्मादि-रप्यन्तःकरणशुद्धिद्वारा मोक्षसाधनभगवज्ज्ञानसाधनत्वेन निमित्तेन **'भावात्'** सम्पाद्यत्वाद् वेदानां कर्मादिवाचित्वम्[1] । एवं मोक्षसाधनसाधनत्वेन प्रकारेणान्यार्थं परमात्मज्ञानार्थमित्यौडुलोमिराचार्यो मन्यत इति सूत्रार्थ उक्तो भवति ॥

## सू – ॐ ॥ अवस्थितेरिति काशकृत्स्नः ॥ ॐ ॥ २३ ॥

### सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।

प्रकारान्तरेण कर्मादिवचनस्य ब्रह्मज्ञानोपयोगित्वं प्रदर्शयत्सूत्रमुपन्यस्य व्याचष्टे - **अवस्थितेरिति** ॥ सर्वं परमात्मनीत्यनेन सूत्रे सर्वस्य जगतः परमात्मनीति पदद्वयाध्याहारः सूचितः । इति वक्तुमित्यनेनान्यार्थमित्यस्या-नुवृत्तिः सूचिता । **'एष सेतुर्विधरणः'** (बृ.६.४.२२) इत्यादाविति शेषः । **'तद्वचनं'** कर्मादिर्वचनमित्यनेन सूत्रे जगद्वाचित्वमित्यस्यानुषङ्गः सूचितः । इतिशब्दस्य द्विर्ग्रहणमावृत्तिं सूचयति । काशकृत्स्न इत्यनन्तरं मन्यत इति शेषः॥

अनेन - **'एष सेतुर्विधरणः'** इत्यादौ सर्वस्य परमात्मनि **'अवस्थितेः'** अवस्थित्युक्तेः तस्याश्च सर्वाधारत्वेन ज्ञातव्यमिति ज्ञानार्थत्वाद् अस्य चाऽधेयज्ञानं विनाऽयोगात् तदर्थं वेदेन कर्मादिकमुच्यत इति साक्षादेव कथं ब्रह्म ज्ञातव्यमिति ज्ञान्यपेक्षितस्वेतरसर्वाधारत्वरूपप्रकारसमर्पकत्वेन वेदानां कर्मादिजगद्वाचित्वमन्यार्थं परमात्मज्ञानार्थमिति काशकृत्स्नाचार्यो मन्यत इति सूत्रार्थ उक्तो भवति ॥

---

१. **'कर्मादिजगद्वाचित्वम्'** – प.

**'कृष्णद्वैपायनमतादेकदेशविदः परे ।**
**वदन्ति ते[1] यथाप्रज्ञं न विरोधः कथञ्चन ॥' इति पाद्मे ॥२३॥**

**॥ इति समाकर्षाधिकरणम् ॥ ५ ॥**

एवं जैमिन्यादिमतान्युपन्यस्य स्वमतं किं नोच्यते सूत्रकारेण । एतेषामेव स्वमतत्वे जैमिन्यादिग्रहणवैयर्थ्यम् । विरुद्धानां च नैकमतत्वम् । एकस्यैव वेदस्यानेकाभिप्रायताऽयोगात् । अविरोधे च मतभेदायोग इत्यत आह – **कृष्णेति ॥** ल्यब्लोपनिमित्ता पञ्चमी । व्यासमतमपेक्ष्येति । यद्वा - सप्तम्यर्थे पञ्चमी । तथा च व्यासाभिमतार्थैकदेशज्ञानिन इत्यर्थः ॥

योजना तु ये परेऽन्ये जैमिन्याद्या यस्मात् **'यथाप्रज्ञं'** यथामति कृष्णद्वैपायनमतैकदेशविद एव, न तदनभिमतार्थविदः । यन्मतानां भगवन्मतत्वमेवेति यावत् । तस्माद् व्यासशिष्या इति यान् वदन्ति, तेषां कथञ्चन परस्परं कृष्णद्वैपायनज्ञातार्थैर्वा तात्पर्यतो वा विरोधो नास्तीति । न चैतेषां भगवन्मतत्वे जैमिन्यादिग्रहणवैयर्थ्यमिति वाच्यम् । शिष्यप्रसिद्ध्यर्थत्वात् । कथञ्चन न विरोध इत्यनेनानेकेषाम् एकाधिकारिकत्वं विरुद्धमिति शङ्का निरस्ता ॥

**'विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन्'** इत्यनुव्याख्याने, नृणामल्पाधिकारिणामवस्थातारतम्यं वदन्निति सुधायां चोक्तरीत्या जैमिनिमतस्य वाक्यसमन्वयार्थत्वात् तन्मात्रयोग्यपदसमन्वयायोग्यमन्दाधिकारिविषयत्वम्, तत्राप्याश्मरथ्यमतस्य, [2]वैराग्यसम्पत्तिप्राक्कालीनस्वर्गाद्यर्थित्वावस्थाविशिष्टाधिकारिविषयत्वम्, औडुलोमिमतस्य तु

---

१. 'वदन्त्येते' ह.
२. 'वैराग्यसम्पत्तिप्रागवस्थाविशिष्टाधिकारिविषयत्वम्' -प.

[१]ज्ञानसम्पत्तिप्राक्कालीनजिज्ञासुत्वावस्थाविशिष्टाधिकारिविषयत्वं काशकृत्स्न-मतस्य तु ज्ञानसम्पत्त्यवस्थाविशिष्टाधिकारिविषयत्वमिति मतानामनेका-धिकारिकत्वात् ।।

## ।। इति समाकर्षाधिकरणम् ।। ५ ।।

१. 'ज्ञानसम्पत्त्यवस्थाविशिष्टाधिकारिविषयत्वम्' – प.

# ॥ ६. अथ प्रकृत्यधिकरणम् ॥

*(प्रकृत्यादिस्त्रीलिङ्गशब्दैः परमात्मन एव वाच्यत्वसमर्थनम्)*

**स्त्रीशब्दा अपि तस्मिन्नेवेत्याह –**

**सू – ॐ ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ ॐ ॥ २४ ॥**

**॥ ६. अथ प्रकृत्यधिकरणम् ॥**

अत्राधिकरणे स्त्रीशब्दानां समन्वयः क्रियते । सिद्धान्तयत्सूत्रमवतारयति- **स्त्रीशब्दा इति** ॥ न प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यो हरिः । कुतः ? तत्र स्त्रीलिङ्गायोगादिति पूर्वपक्षं प्रतिक्षेप्तुं स्त्रीशब्दा अपि तस्मिन् परमात्मन्येव वर्तन्त इति साधयति सूत्रकार इत्यर्थः । स्त्रीशब्दा इति सामान्योक्त्या सौत्रप्रकृतिशब्दोऽन्यस्याप्युपलक्षक इति सूचितम् । **'तत्तु समन्वयात्'** इति सर्वशब्दानामित्यानुमानिकाधिकरणवाक्यमत्रापि सम्बध्यते ॥

तथा च **'तत्तु समन्वयात्'** इत्यत्र समन्वेतव्यत्वेनोक्तानां सर्वशब्दानां मध्ये ये कामादितरत्रेत्यत्रापरममुख्यवृत्त्या श्रीतत्त्वपरत्वमाश्रित्य तद्विषये भाष्योदाहृतवत्सश्रुतौ **'या प्राणेन संविशत्यदितिर्देवतामयी'** (कठ.२.१.७) इति काठके, अन्यत्र च श्रुताः स्त्रीलिङ्गशब्दास्तेऽपि तस्मिन्नेव परममुख्यवृत्त्या वाचकतया [१]सन्तीति योजना ॥

न केवलमानन्दमयेन्द्रवरुणसूर्याग्न्याकाशप्राणादिपुल्लिङ्गशब्दाः, नापि ब्रह्माक्षरज्योतिरादिनपुंसकशब्दा इत्यपिशब्दार्थः ॥

---

१. **'सन्तीति साधयति सूत्रकार इत्यर्थः ।' – प.**

अनेन सङ्गतिविषयादिकं[1] दर्शितम् । 'तस्मिन्नेव[2]' न प्रकृत्यादावित्यवधारणान्वयेन न प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यो हरिः [3]तत्र स्त्रीलिङ्गायोगात्, किन्तु प्रकृत्यादय एवेति सयुक्तिकपूर्वपक्षोऽपि सूचितः ॥

सर्वमिच्छाधीनं यस्याः सा सर्वेच्छा ।जडप्रकृतिव्यावर्तनायाविकृतिरिति । श्रुत्यक्षरार्थस्तु [4]तृतीये कामाधिकरणटीकायामभिहितः । **'एषा ह्येव'** (वत्सश्रुतिः) इति श्रुतेः पाठान्तरम् । अत एव गीताभाष्ये **'एषा ह्येव प्रकृतिः'** इति [5]वाक्यमुदाहृतम् । **'या देवतामयी'** देवतोत्तमा **'अदितिः'** तच्छब्दवाच्या भगवत्तनुः[6] **'प्राणेन'** मुख्यवायुना **'सं'** सह 'विशति[7]' तिष्ठति **'एतद्वैतत्'** यत् त्वयापृष्टमित्यर्थः । नचिकेतसं प्रति यमवाक्यमेतत् ॥

**'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ति' इति प्रतिज्ञादृष्टान्तानुपरोधात् प्रकृतिशब्दवाच्योऽपि स एव ॥ २४ ॥**

सूत्रे तदनुकूलप्रतिज्ञादृष्टान्तयोरभिधानादित्यभिप्रेतहेतो[8]रप्रयोजकत्व-शङ्कावारणाय विपक्षे हेतूच्छित्तिरूपबाधकोपन्यासाय प्रवृत्तं प्रतिज्ञेत्याद्यंशं क्रमनियमाभावसूचनाय प्रथमं व्याचष्टे – **हन्तेति** ॥ हन्तेत्यास्वादने । **'पुरुषं'** पूर्णप्रवृत्तिनिमित्तकम् **'इमं'** प्रकृतमेव परमात्मानं **'सर्वाणि नामानि'** सर्वशब्दाः **'अभि'** परममुख्यतो वदन्तीति प्रतिज्ञातार्थः । अत्र दृष्टान्तमाह – **यथेति** ॥

---

१. 'सङ्गतिविषयसंशयादिकं च' – प.
२.'तस्मिन्नेव न प्रकृत्यादौ, तस्मिन् युज्यन्त्येवेति वाऽवधारणान्वयेन न'– प.
३.'तस्य स्त्रीलिङ्गात्'– प.
४.'तृतीयटीकायाम्'– प
५.'वाक्यान्तरम्' – प.
६.'-वाच्यभगवत्तनुः'– प.
७.'-वायुना सह संविशति'– प.
८.'इत्यभिप्रेत्य हेतोः' – प.

# ।। ६. अथ प्रकृत्यधिकरणम् ।।

*(प्रकृत्यादिस्त्रीलिङ्गशब्दैः परमात्मन एव वाच्यत्वसमर्थनम्)*

**स्त्रीशब्दा अपि तस्मिन्नेवेत्याह –**

**सू – ॐ ।। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ।। ॐ ।। २४ ।।**

**।। ६. अथ प्रकृत्यधिकरणम् ।।**

अत्राधिकरणे स्त्रीशब्दानां समन्वयः क्रियते । सिद्धान्तयत्सूत्रमवतारयति- **स्त्रीशब्दा इति** ।। न प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यो हरिः । कुतः ? तत्र स्त्रीलिङ्गायोगादिति पूर्वपक्षं प्रतिक्षेप्तुं स्त्रीशब्दा अपि तस्मिन् परमात्मन्येव वर्तन्त इति साधयति सूत्रकार इत्यर्थः । स्त्रीशब्दा इति सामान्योक्त्या सौत्रप्रकृतिशब्दोऽन्यस्याप्युपलक्षक इति सूचितम् । **'तत्तु समन्वयात्'** इति सर्वशब्दानामित्यानुमानिकाधिकरणवाक्यमत्रापि सम्बध्यते ।।

तथा च **'तत्तु समन्वयात्'** इत्यत्र समन्वेतव्यत्वेनोक्तानां सर्वशब्दानां मध्ये ये कामादितरत्रेत्यत्रापरममुख्यवृत्त्या श्रीतत्त्वपरत्वमाश्रित्य तद्विषये भाष्योदाहृतवत्सश्रुतौ **'या प्राणेन संविशत्यदितिर्देवतामयी'** (कठ.२.१.७) इति काठके, अन्यत्र च श्रुताः स्त्रीलिङ्गशब्दास्तेऽपि तस्मिन्नेव परममुख्यवृत्त्या वाचकतया [१]सन्तीति योजना ।।

न केवलमानन्दमयेन्द्रवरुणसूर्याग्न्याकाशप्राणादिपुल्लिङ्गशब्दाः, नापि ब्रह्माक्षरज्योतिरादिनपुंसकशब्दा इत्यपिशब्दार्थः ।।

---

१. **'सन्तीति साधयति सूत्रकार इत्यर्थः ।' – प.**

अनेन सङ्गतिविषयादिकं[१] दर्शितम् । **'तस्मिन्नेव**[२]**'** न प्रकृत्यादावित्यवधारणान्वयेन न प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यो हरिः [३]तत्र स्त्रीलिङ्गायोगात्, किन्तु प्रकृत्यादय एवेति सयुक्तिकपूर्वपक्षोऽपि सूचितः ॥

सर्वमिच्छाधीनं यस्याः सा सर्वेच्छा ।जडप्रकृतिव्यावर्तनायाविकृतिरिति । श्रुत्यक्षरार्थस्तु [४]तृतीये कामाधिकरणटीकायामभिहितः । **'एषा ह्येव'** (वत्सश्रुतिः) इति श्रुतेः पाठान्तरम् । अत एव गीताभाष्ये **'एषा ह्येव प्रकृतिः'** इति [५]वाक्यमुदाहृतम् । **'या देवतामयी'** देवतोत्तमा **'अदितिः'** तच्छब्दवाच्या भगवत्तनुः[६] **'प्राणेन'** मुख्यवायुना **'सं'** सह 'विशति[७]' तिष्ठति **'एतद्वैतत्'** यत् त्वयापृष्टमित्यर्थः । नचिकेतसं प्रति यमवाक्यमेतत् ॥

**'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ति' इति प्रतिज्ञादृष्टान्तानुपरोधात् प्रकृतिशब्दवाच्योऽपि स एव ॥ २४ ॥**

सूत्रे तदनुकूलप्रतिज्ञादृष्टान्तयोरभिधानादित्यभिप्रेतहेतो[८]रप्रयोजकत्व-शङ्कावारणाय विपक्षे हेतूच्छित्तिरूपबाधकोपन्यासाय प्रवृत्तं प्रतिज्ञेत्याद्यंशं क्रमनियमाभावसूचनाय प्रथमं व्याचष्टे – **हन्तेति** ॥ हन्तेत्यास्वादने । **'पुरुषं'** पूर्णप्रवृत्तिनिमित्तकम् **'इमं'** प्रकृतमेव परमात्मानं **'सर्वाणि नामानि'** सर्वशब्दाः **'अभि'** परममुख्यतो वदन्तीति प्रतिज्ञातार्थः । अत्र दृष्टान्तमाह – **यथेति** ॥

---

१. 'सङ्गतिविषयसंशयादिकं च' – प.
२.'तस्मिन्नेव न प्रकृत्यादौ, तस्मिन् युज्यन्त्येवेति वाऽवधारणान्वयेन न'– प.
३.'तस्य स्त्रीलिङ्गात्'– प.
४.'तृतीयटीकायाम्'– प
५.'वाक्यान्तरम्' – प.
६.'-वाच्यभगवत्तनुः'– प.
७.'-वायुना सह संविशति'– प.
८.'इत्यभिप्रेत्य हेतोः' – प.

**'स्यन्दमानाः'** प्रस्रवन्त्यः समुद्रः अयनं यासां तास्तथोक्ताः **'समुद्रमभिविशन्ति'** तदाभिमुख्येन गतास्तं प्रविशन्तीत्यर्थः । उक्तप्रकारं दार्ष्टान्तिकेऽप्यतिदिशति – **एवमेवेति ।। 'एतानि'** प्रमितानि सर्वाणि नामानि **'एवं'** नदीवत् स्यन्दमानानि मध्ये स्थिरचरव्यवहारान् घटयन्त्यपि पुरुषैकायतनस्वप्रवृत्तिनिमित्तधर्माण्यन्ततस्तमेव **'पुरुषं'** परमात्मानम् **'अभि'** सर्वतोऽभिमुखतो[१] विशन्ति वाचकतयेत्यर्थः । **इतीति ।।** एवंरूपयोः प्रतिज्ञादृष्टान्तयोः **'अनुपरोधात्'** अनुपहतेरित्यर्थः ।।

एवं सतीत्यादावुपस्कार्यम् । प्रकृत्यादिस्त्रीशब्दवाच्यत्वाङ्गीकार इति तदर्थः । श्रुतितात्पर्यविषयीभूतसर्वशब्दवाच्यत्वस्य प्रकृत्यादिकतिपयशब्द-वाच्यत्वाभावेऽप्ययोगेनान्यथा तदुपरोधः स्यादिति भावः । इदानीं प्रकृतिश्चेति प्रतिज्ञाभागं व्याचष्टे – **प्रकृतीति ।।** [२]अत्रापि प्रकृतिपदमन्योपलक्षकम् । प्रकृतेः लक्ष्म्याः स्त्रीषु प्रधानत्वात् तन्नामग्रहणम् । तथा च प्रकृत्यादिस्त्रीशब्दवाच्योऽपीत्यर्थः[३] । अपिः न केवलं पुल्लिङ्गपुरुषात्मादि-शब्दवाच्यो हरिः, किन्तु प्रकृत्युपलक्षितस्त्रीलिङ्गशब्दवाच्योऽपीति समुच्चये ।।

अनेन[४] सौत्रचशब्दो व्याकृतः । न केवलं प्रकृतिशब्देनैव वाच्य इत्युच्यते, किन्तु स्त्रीशब्दानां सर्वेषामपि वाच्य एवेति तत्त्वप्रदीपरीत्या स्त्रीलिङ्गशब्दान्तरसमुच्चये वाऽपिशब्दः । अपिना एकत्र [५]स्त्रीत्वपुंस्त्वयो-र्विरोध इत्यपि न । प्रमाणद्वययोरप्युपपत्तेरिति चशब्दस्य [६]शङ्कानिरासाख्य-प्रयोजनमपि सूचितम् ।।

---

१. **'सर्वतो मुख्यतो' – प.** २. **'अत्र प्रकृतिपदम्' – प.**
३. **'स्त्रीशब्दवाच्योऽपीति भावः' – प.**
४. **'अनेनेति पूर्वेण चापिना सौत्रचकारो व्याकृतः' – प.**
५. **'स्त्रीपुंस्त्वयोः' – प.** ६. **'शङ्कानिरसनाख्यप्रयोजनमपि' – प.**

स हरिरेवेत्यनेन समन्वयसूत्रात् तत्त्वित्येतच्छ्रौतपुरुषपदानुसाराल्लिङ्गविपरिणामेनेहानुवर्तनीयमिति सूचितम् । एवकारस्तु यदाऽपिः टीकाकाररीत्या पुल्लिङ्गशब्दसमुच्चायकः, तदा विशेष्यसङ्गतोऽन्यव्यावर्तकः । यदा तु तत्त्वप्रदीपरीत्या न केवलं प्रकृतिशब्दवाच्य एव सः, किन्तु सर्वेषां[१] स्त्रीशब्दानामिति स्त्रीलिङ्गान्तरसमुच्चायकः, तदा विशेषणसङ्गतो वाच्यत्वायोगव्यवच्छेदकः । वस्तुतस्तु स्त्रीशब्दवाच्यश्चेति टीकागतचशब्दादपि[२] तत्त्वप्रदीपानुसारादेवार्थो व्याख्येयः । अत एव टीकायां न प्रकृत्यादिशब्दवाच्यो हरिरिति पूर्वपक्षप्रतिज्ञोक्तिः । स्पष्टः सूत्रार्थः ॥

**सू - ॐ ॥ अभिध्योपदेशाच्च ॥ ॐ ॥ २५ ॥**

**'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।'** *(श्वे.४.१०)*
**'महामायेत्यविद्येति नियतिर्मोहिनीति च[३] ।**
**प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ॥'**
**इति वचनात् तदभिध्यैव प्रकृतिशब्देनोच्यते ।**

एवं सामान्यप्रमाणेन प्रकृत्यादिशब्दवाच्यतां हरेः प्रतिपाद्येदानीम् अशेषस्त्रीशब्दोपलक्षकप्रकृतिशब्दवाच्यत्व[४] एव विशिष्य प्रमाणं प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे – **अभिध्येति** ॥ विशिष्यप्रमाणाख्ययुक्तिसमुच्चये[५] चशब्दः ॥ सूत्रस्याभिध्यायाः प्रकृतित्वोपदेशात् परमेश्वरत्वोपदेशाच्चेति वृत्तिमाश्रित्योपदेशपदोक्तप्रमाणमाह[६] – **मायामिति** ॥

१. 'किन्त्वपि सर्वेषामपि वाच्य इति स्त्रीलिङ्गान्तरसमुच्चायकः ।' – प.
२.'मोहनीति च' ह.
३. 'टीकागतचशब्दोऽपि' – प.
४. '-वाच्यतायामेव' – प.
५. 'विशेषप्रमाणस्य युक्तिसमुच्चये'– प.
६.'उपदेशो परोक्तप्रमाणमाह' – प.

वचनादित्युभयान्वयि । तथा च '**महेश्वरम्**' इति श्रुतिवचनात् '**कथ्यते**' इति स्मृतिवचनाच्चेत्यर्थः ॥

सूत्रे प्रकृतिश्चेत्यनुवृत्तिम् अभिध्येति बुद्ध्या विवेकं चशब्दस्यावधारणार्थत्वं चाऽश्रित्य आहृत्य लब्धां प्रतिज्ञां दर्शयति – **तदभिध्यैवेति** ॥ तस्येश्वरस्याभिध्यैव इच्छैव प्रकृतिपदेनोच्यते नान्यत् । एवं या प्रकृतिपदेनात्रोच्यते सा तदभिध्यैव नान्यस्येत्यर्थः । '**प्रकृतिं**' प्रकृतिपदवाच्यम् । [1]तुशब्दौ मायामायिनोरुद्देश्यत्वरूपविशेषद्योतकौ[2] । तेन या प्रकृतिः सा माया मिथ्येति परव्याख्या[3] निरस्ता ।

ननु श्रुतौ मायाया एव प्रकृतिशब्दवाच्यत्वं ज्ञायते, नेच्छाया इत्यतो महामायेति पूर्वार्धोदाहरणम् । चशब्दस्समुच्चये । उच्यत इत्यनेनोपचार-निवृत्तिः । श्रुतिस्मृत्योरनुशासनरूपत्वात् । अत एव तयोर्विद्याऽत्र कथ्यते इति चोक्तिः । हे अनन्त ! तव इच्छैव महामायेत्यादिशब्दैरुच्यत इत्यर्थः । नियतिः प्रकृतिरित्यत्रापि इति शब्दोऽन्वेतव्यः । अत एवानेकवारोक्तिः ।

**'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः' इति श्रुतेरभिध्या च स्वरूपमेव ।**

ननु इच्छायाः प्रकृतिशब्दवाच्यत्वोक्तावपि[4] कथं परमात्मनस्तत्प्राप्तिरित्यत आह – **स इति** ॥ '**सः**' परमात्मा '**जूतिः**' प्रेरणा '**सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते**' इत्यैतरेयभाष्योक्तेः । चशब्दो हेत्वर्थे । [5]तुशब्दार्थो वा । तथा च इति श्रुतेरभिध्या ब्रह्मस्वरूपमेव न भिन्नेति

१. '**तुशब्दद्वयं**' – प.
२. '**-द्योतकम्**' – प.
३. '**परकृतव्याख्या**' – प.
४. '**-वपि कुतः परमात्मनः**' – प.
५. '**तुशब्दार्थे**' – प

ज्ञायते । अतो नोक्तशङ्काऽवकाश इत्यध्याहारेण वाक्ययोजना । अभिध्या च स्वरूपमेवेत्यनेनाभिध्यायाः स्वरूपत्वोपदेशादित्यपि सूत्रवृत्तिर्दर्शिता । न च श्रुतौ ब्रह्मण एवाभिध्यादिरूपत्वमुच्यते [१], नाभिध्यायास्तत्स्वरूपत्वमिति वाच्यम् । [२]समानवित्तिवेद्यतया श्रुतौ व्यतिरेकेणान्वयेन वा तस्याप्युक्तप्रायत्वात् ॥

अनेन – अभिध्यायाः प्रकृतित्वोपदेशात् सा प्रकृतिस्तच्छब्दवाच्या । एवं तस्याः पारमेश्वरत्वोपदेशात् सा तस्यैव । एवं ब्रह्मणोऽभिध्यात्वोपदेशात् सिद्धादभिध्याया ब्रह्मत्वोपदेशादभिध्या तत्तु ब्रह्मैव । तथा च न केवलं पूर्वोक्तसामान्यहेतोः, किन्तु प्रकृतिशब्द-वाच्येच्छात्मकत्वोक्तेश्च प्रकृतिः ब्रह्मैवेति सूत्रार्थ उक्तो भवति ॥

**'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।**
**परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते ॥' इति ब्रह्माण्डे ॥ २५ ॥**

ननु नेच्छा [३]भगवत्स्वरूपं, मायिनमितीनिप्रत्ययेन तवेति षष्ट्या च भेदसाधकसम्बन्धोक्तेरित्यत आह – **ध्यायतीति** ॥ चः समुच्चयेऽवधारणे च । अतीवेति निपातसमुदायः । तथा च ध्यानरूपोऽपि भगवान् ध्यायतीति ध्यानकर्तृतयोच्यते । एवम् '**असौ**' हरिः '**अतीव**' अत्यन्तं सुखरूप एव '**स आनन्दः**' इति श्रुतौ सुखरूपत्वेनोक्त एव सुखीत्युच्यते श्रुतिस्मृतिष्वित्यर्थः ॥

[४]अनेन भेदाभेदः कदाचिद् दुःखस्वरूपत्वं वा निरस्तम् । चशब्देन सोऽभिध्येति मायारूपत्वेनोक्तो मायिनमित्यादौ मायीत्युच्यत इति प्रकृतं समुच्चिनोति ॥

---

१. 'अभिध्यादिस्वरूपत्वम्' – प. २. 'समानवित्तिवेद्यतायाः' – प.
३. 'भगवद्रूपम्' – प. ४. 'अनेन नेशभेदः' – ।

न चैतदत्र विरुद्धम्, ऐश्वर्ययोगादित्याह - [१]**परमेति** ।। **योगः** उपायः । **'विरुद्धार्थतया'** विरुद्धधर्मोपेततया[२] एकस्मिन् ब्रह्मणि विरुद्धत्वेन [३]प्रतीतसुखत्वसुखित्वाद्यर्थप्रत्यायकशब्दवाच्यतयेति यावत् । **'इष्यते'** प्रामाणिकैरित्यर्थः[४] । ब्रह्माण्डपुराणे[५] इत्यस्योक्तत्वान्न विरोध इत्यध्याहृतवाक्येनान्वयः ।।

## सू - ॐ ।। साक्षाच्चोभयाम्नायात् ।। ॐ ।। २६ ।।

**'एष स्त्र्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद् विश्वरूपः' इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ।। २६ ।।**

ननूक्तप्रमाणैः सामान्येनेच्छाद्वारा वा प्रकृतिशब्दवाच्यत्वप्राप्तावपि न साक्षादीश्वरस्य तद्वाच्यत्वप्राप्तिरित्याशङ्कां विशेषप्रमाणोक्त्या परिहरत्सूत्रमुपन्यस्य व्याचष्टे - **साक्षादिति** ।। साधारण्येन विना इच्छाद्वारमन्तरेण चेत्यर्थः । एवशब्देन सौत्रचशब्दोऽवधारणार्थतया व्याख्यातः । **'प्रकृतिपुरुषत्वाम्नानात्'** स्त्रीपुल्लिङ्गशब्दवाच्यत्वाभिधानात् । तस्येति विपरिणामेनान्वयः । अनेनोभयशब्दो व्याकृतः ।।

यद्यपि प्रकृतित्वाम्नानादित्येव वाच्यम्, न तूभयेति । पुरुषत्वे

१. **'परमेश्वरेति' – प.**
२. **'विरुद्धधर्मतया एकस्मिन् धर्मिणि' – प.**
३. **'प्रतीतसुखित्वदुःखित्वाद्यर्थप्रत्यायकत्वशब्दवाच्यतयेति' – प.**
४. **'प्रामाणिकैरिति शेषः' – प.**
५. **'ब्रह्माण्डे पुराणे' – प.**

विवादाभावात् । तथाऽप्याद्यसूत्रे चशब्देन तस्य समुच्चितत्वादेवमुक्तम् । आम्नानादित्यस्य प्रकृतिः[१] स एवेति प्रधानसाध्येनान्वयः ।।

**'एषः'** परमात्मा[२] सततं रमणात् स्त्रीशब्दवाच्यः । यथोक्तं तत्त्वप्रदीपे सततं रमणात् स्त्रीति । '[३]**एवमेव पुरुषः'** आत्मा तच्छब्दवाच्यः । **'एष प्रकृतिः'** तच्छब्दवाच्यः[४] । सूत्रे साक्षादित्युक्तासाधारण्यज्ञापनायैव[५] प्रकृतिरिति विशिष्योदाहरणम् । **'एष ब्रह्म'** स्त्रीपुंदोषराहित्यात्तदुपलक्षिताशेषनपुंसकशब्दवाच्यः । श्रुतावात्मा पुरुष इति, स्त्री प्रकृतिरिति शब्दद्वयोपादानमशेषस्त्रीलिङ्गशब्दसङ्ग्रहार्थम् ।।

हरेः विरुद्धानेकशब्दवाच्यत्वे निमित्तमाह[६] - **लोक इत्यादिना ।। 'लोकः'** आधारः । प्रकृत्यादेरिति शेषः । **'आलोकः'** प्रकाशरूपः । [७]एषः क इत्यपेक्षायाम् आह - **योऽसौ हरिरिति ।। 'आदिः'** कारणं जगज्जन्मादेरिति शेषः । स्त्र्यादौ विश्वस्मिन् रूपाण्यस्य स्त्र्यादिविश्वस्य[८] रूपमिव रूपमस्येति वा विश्वरूपः ।।

अनेन हरेस्तच्छब्दवाच्यत्वे सामान्यतस्तत्तदाधारत्वतत्तत्स्थितत्वतत्तत्प्रकाशकत्वतत्तत्कारणत्वतत्तदाकारत्वतत्तन्नियामकत्वादीनि निमित्तानि,

---

१. 'प्रकृतिश्च' – प.

२. 'परमात्मा स्त्री अशेषस्त्रीलिङ्गशब्दवाच्यः । तत्वप्रदीपरीत्या सततरमणात् स्त्रीति वा ।' – प.

३. 'एवमेष पुरुषः' – प.

४. '-वाच्यः,आत्मा सर्वपुल्लिङ्गशब्दवाच्यः' – प.

५. '-ज्ञापनायैष प्रकृतिरिति पुनर्विशिष्योदाहरणम् ।' – प.

६. 'असाधारणनिमित्तमाह' – प.

७. 'एष इति क इत्य-' – प.

८. 'स्त्र्यादिविश्वं' – प.

रूपबहुल्याच्च विरुद्धानेकशब्दवाच्यत्वोपपत्तिरित्युक्तं भवति । तर्ह्याधारभूतवस्तूत्पत्तिनाशाभ्याम् अस्याप्युत्पत्तिनाशौ स्यातामित्यत आह – **अनादिरित्यादि** ॥ अनाद्यनन्तपदाभ्यामुत्पत्तिनाशराहित्यमुच्यते[1]। अत्र हेतुः – परात् । प्रकृत्यादेः परम इति । **'अन्तः'** अन्तकः । यद्वा, प्रकृत्यादेरन्तस्स्थित इत्यर्थः[2] ॥

यद्वा – स्त्रीपुरुषपदयोः, [3]प्रकृत्यात्मपदयोर्लोकालोकपदयोराद्यनादिपदयोरनन्तान्तपदयोः स्त्रीपुरुषजडचेतनज्ञानाज्ञानरूपत्वोत्पत्त्यनुत्पत्तिनाशानाशरूपविरुद्धार्थकयोरपि हरिरेव वाच्यः । अत एव ब्रह्मेति श्रुत्यर्थः ॥

सूत्रार्थस्तु – साक्षाच्चाऽद्यसूत्रोक्तं सामान्यरूपं द्वितीयसूत्रोक्तं प्रकृतिशब्दवाच्येच्छात्मकत्वरूपं वा द्वारमनपेक्ष्य साक्षादेवोभयस्य प्रकृत्यादिस्त्रीशब्दवाच्यत्वस्य पुरुषादिपुल्लिङ्गवाच्यत्वस्य चाऽम्नानात् **'एषः'** इति श्रुतावुक्तत्वात् प्रकृतिश्च स एवेति नेश्वरस्य प्रकृत्यादिशब्दवाच्यत्वाभावः शङ्क्य इति ॥

## सू – ॐ ॥ आत्मकृतेः परिणामात् ॥ ॐ ॥ २७ ॥

**प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च ।**

नन्वेवं[4] स्त्रीशब्दवाच्यत्वोपलक्षकप्रकृतिशब्दवाच्यत्वस्य हरेः श्रुत्युक्तत्वेऽपि कथं तद् युज्यते, तत्र तस्य प्रवृत्तौ निमित्ताभावात् । न हि सङ्केतमात्रं सिद्धान्तिभिरभ्युपगम्यत इत्याशङ्कां परिहरत्सूत्रं पठित्वा तत्फलितं

---

१. 'उच्यते । अतोऽन्तकः । यद्वा' – प

२. 'इत्यर्थः । अत्र हेतुः परात् । प्रकृत्यादेः पर इति । यद्वा,' – प.

३. 'प्रकृत्यात्मपरयोः' – प.

४. 'स्त्रीशब्दमात्रोपलक्षक-' –प.

तावदाह - **आत्मेति** ॥ प्रकर्षेण करोतीति प्रकृतिरिति **'योगात्'** महायोगान्निरतिशयप्रवृत्तिनिमित्तवत्त्वाच्च प्रकृतिः विष्णुरित्यर्थः । न केवलं श्रुतावाम्नानाद् बहुलप्रयोगाख्यरूढिमात्रादिति चशब्दार्थः ॥

यद्वा - योगस्यैव भावान्न विष्णोः प्रकृतिशब्दवाच्यत्वे निमित्ताभाव इत्यवधारणार्थश्चकारः[१] । यद्यपि प्रकृष्टा कृतिर्यस्येत्येव [२]विग्रहः प्रदर्शनीयो न[३] प्रकर्षेण करोतीति । तथात्वे प्रकर्तेति वा प्रकृदिति वा प्रकारुरिति[४] वा वृत्तिः स्यात् । तथा करणविषय एव प्रकृष्टत्वान्वयः स्यान्न तु कृतौ । अत एव टीकायां प्रकृष्टा कृतिः यस्येत्येव विग्रहः प्रदर्शितः । तथाऽपि तस्यैव फलितोक्तिरित्यदोषः । अत्र प्रकर्षेण करोतीति विग्रहे प्रकृतिरिति वृत्तिवाक्यं प्रदर्शितम्, न तूद्देश्यार्पकं तत्, तस्य प्रकृतिश्चेत्यनेनैव प्राप्तेः ॥

**प्रकृतावनुप्रविश्य तां परिणाम्य [५]तत्परिणामनियामकतया तत्र स्थित्वाऽऽत्मनो बहुधाकरणात् ।**

एवं फलितार्थमभिधाय कथं प्रकृष्टेश्वरस्य[६] कृतिरित्यतः सूत्रं व्याचष्टे– **प्रकृताविति** ॥ अनेन परिणामकत्वोपयुक्तं तत्पूर्वभाविव्यापारमाह[७] । **अनुप्रविश्येति** । **'अनु'** अनुकूलतया **'तां'** प्रकृतिं परिणाम्येति । अनेन सूत्रे परिणामादिति[८] ल्यब्लोपनिमित्ता पञ्चमी । परिणाम्यात्मकृतेरित्यन्वयः । ल्यपा च परिणामस्याऽत्मकरणात् पूर्वभावितोच्यत[९] इत्युक्तं भवति ॥

---

१. '-त्यवधारणार्थमेवकारः' – प.
२. 'यस्येति विग्रहः' – प.
३ 'न तु' – प.
४. 'प्रकार इति वा' – प.
५ 'तत्परिणामेषु स्थित्वा' ह.
६. 'प्रकृष्टेश्वरस्य प्रकृतिरि' – प.
७. '–माह । नन्वनुकूलतायां प्रकृतिं परिणाम्येत्यनेन सूत्रे' – प.
८. 'विपरिणामादिति'– प.
९. 'पूर्वभाविता लभ्यत इत्युक्तं' – प.

तथा चेत्थं योजना– प्रकृतेः स्वतः परिणामासामर्थ्यात् तत्परिणामानुकूलतया प्रकृतौ प्रविश्य तां **'परिणाम्य'** स्वयमविकार एव तस्यां महदादिरूपेण विकारं विधाय अथ तत्परिणामकत्वेन प्रकृतिपरिणाम-महदादिप्रेरकत्वेन **'तत्र'** तत्परिणामेषु महदादिषु **'स्थित्वा'** स्थित्यर्थमिति यावत् । **'आत्मनः'** स्वस्य रूपेण **'बहुधाकरणात्'** व्यक्तीकरणाद् भवतीश्वरकृतिः प्रकृष्टा । अतः[१] प्रकर्षेण करोतीति योगाच्च प्रकृतिर्विष्णुरिति । अनेन प्रधानस्य स्वस्य च बहुधाकरणमेव प्रकृष्टकरणमिति प्रकृतिशब्दनिमित्तं प्रदर्शितं भवति ॥

**'अथ हैष आत्मा प्रकृतिमनुप्रविश्याऽत्मानं बहुधा चकार तस्मात् प्रकृतिस्तस्मात् प्रकृतिरित्याचक्षते'**

**इति भाल्लवेयश्रुतिः ।**

अनाश्वासपरिहाराय स्वोक्तसूत्रार्थे श्रुतिस्मृती चाऽह – **अथेति** ॥ प्रमेयान्तरारम्भार्थोऽथशब्दः । हिशब्दः प्रमाणप्रसिद्धौ । तथा **चैषः** परमात्मा यस्मात् प्रकृतेः स्वतः परिणामासामर्थ्यात् परिणामानुकूलतया[२] **प्रकृतिं प्रविश्य** तां परिणाम्य तत्परिणामप्रेरकत्वेन तत्र स्थित्यर्थ**मात्मानं** रूपेण[३] **बहुधा चकार** । **तस्माद्ब**हुधाकरणात् **'प्रकृतिः'** तच्छब्दवाच्यः । **'तस्मात्'** प्रकृतिवाच्यत्वादेनं **प्रकृतिरित्याचक्षते** ज्ञानिन इति श्रुत्यर्थः ॥ श्रुतिरित्यनन्तरमुक्तार्थे प्रमाणमिति शेषः ॥

**'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् ।**

---

१. **'अतः'** इति पदं प. पुस्तके नास्ति ।
२. **'तत्परिणामानुकूलतया'** – प.
३. **'रूपेण'** इति पदं प. पुस्तके नास्ति ।

**अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ॥' इति नारदीये ॥**

स्मृतौ यद्यपितथापीत्यर्थेऽपिः । तुशब्दो विशेषार्थः । **'अनु'** अनुकूलतयाऽऽत्मानं बहुधा चकारेति शेषः । तथा च यद्यपि गोविन्दः **'परमोऽविकारः'** अत्यन्तं निर्विकारः, मायायाः प्रकृतेः पर इति वा[१] । तथाऽपि **'चः'** यतः विकारानुकूलतयोपचयाख्यविकारयुक्तां **'प्रकृतिं'** प्रधानं प्रविश्य तां परिणाम्य तत्परिणाममहदादिप्रेरकत्वेन तत्र स्थित्यर्थमात्मानमपि बहुधा चकार । [२]अतः प्रकृतिस्तच्छब्दवाच्यः । यत एवमतोऽयं कविभिः प्रकृतिरित्यभिधीयत इति स्मृत्यर्थः ॥

न केवलं पुरुष इति वा चशब्दार्थः । गोविन्द इत्यनेनाविकारत्वे[३] **'निर्विकारोऽक्षरः शुद्धः'** इति वेदप्रतिपाद्यत्वाख्यहेतुरुच्यते । नारदीय इत्यनन्तरम् उक्तमिति शेषः ॥ स्पष्टः सूत्रार्थः ॥

**न चान्यत्कल्प्यम्, अप्रामाणिकत्वात्[४] ॥ २७ ॥**

[५]अपव्याख्यां दूषयति - **न चेति** ॥ चस्त्वर्थः । **'अन्यत्'** ब्रह्मणो जगदुपादानत्वं[६] न कल्प्यम्, [७]प्रकृतिश्चेत्यादिसूत्रार्थतयेति शेषः । कुत इत्यत आह - **अप्रामाणिकत्वादिति** ॥ तस्येति शेषः । [८]नञस्तद्विरुद्धतदभावार्थत्वं, प्रमाणेन सिद्धं तदविरुद्धं च प्रामाणिकम्, तद्भिन्नमप्रामाणिकं, तस्य भावस्तत्त्वं तस्मात् ॥

---

१. 'पर इति पृथग् विशेषणम् ।' – प.

२. 'ततः प्रकृति-' – प

३. '-विकारित्वे' – प.

४. 'अप्रमाणत्वात्' ह.

५. 'अपव्याख्यानं दूषयति' – प.

६. '–पादानत्वं तु न' – प.

७. 'प्रकृतिश्चेति' – प

८. 'बहुव्रीहौ नञः पुनः तदभावतद्विरुद्धार्थत्वं' – प.

तथा च तस्य ब्रह्मणो जगदुपादानत्वस्य प्रमाणशून्यत्वात्, **'अविकारः'** इत्यादिप्रमाणविरुद्धत्वात् [१]समन्वयप्रतिपादकप्रमाणाध्यायासङ्गतत्वाच्चेत्यर्थः ॥

**सू - ॐ ॥ योनिश्च हि गीयते ॥ ॐ ॥ २८ ॥**

**अव्यवधानेनोत्पत्तिद्वारत्वं च प्रकृतित्वम् ।**

**तच्चास्यैव हि गीयते[२]**

**'यद् भूतयोनिं परिपश्यन्ति धीराः' (मुं.१.१.६) इति ।**

[३]ननु तथाऽपि न प्रकृतिशब्दवाच्यत्वं परमात्मनो युज्यते, तच्छब्दस्य स्त्रीलिङ्गत्वात् परमात्मनश्च पुंस्त्वेन तत्र[४] स्त्रीलिङ्गाभावात् । न केवलं लिङ्गानुपपत्तिमात्रम्, किन्तु श्रौतप्रकृतिशब्दोपलक्षितस्त्रीशब्दमात्रे[५] प्रकृत्यर्थानुपपत्तिरपि, तच्छब्दप्रवृत्तौ[६] निमित्ताभावादिति शङ्कां[७] परिहरत्सूत्रमुपन्यस्य व्याचष्टे - **योनिश्चेति** ॥ **'अव्यवधानेन'** [८]स्त्र्यादिव्यवधानमन्तरेणापत्योत्पत्तिद्वारत्वं तद्वत्त्वम् । स्वदेहादेवापत्योत्पादकत्वमिति यावत् ॥

---

१. 'समन्वयप्रतिपादकप्रथमाध्याया-' प.

२. 'अस्यैव गीयते' ह.

३. 'ननु न तथापि प्रकृति-' – प

४ 'तत्र' इति पदं प.पुस्तके नास्ति ।

५ '-पलक्षिते स्त्रीशब्दे' – प.

६. 'तच्छब्दवृत्तौ' – प.

७. 'आशङ्कां' – प.

८. 'स्त्र्यादिव्यवधानमन्तरेण, स्वदेहादेवेत्यर्थः । द्वारत्वं मुखत्वम् । कारणत्वमिति यावत् । अपत्येत्यादौ संयोज्यम् । द्वारत्वमित्यन्तेन योनित्वं निरुक्तम् । प्रकृतित्वं प्रकृत्यादिस्त्रीलिङ्गशब्दप्रवृत्तिनिमित्तम् ।' – प.

यद्यपि 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इति गीतातात्पर्यनिर्णयोदाहृताभिधानाद् योनिशब्दो गुह्यस्थानेऽव्यवधानेनापत्योत्पादनद्वारे रूढः । यथा **'योनेः शरीरम्'** इत्यत्र तद्वत्यां भार्यायां निरूढलाक्षणिकः । तथा **'मम योनिर्महद् ब्रह्म'** इत्यत्र । तथा च नैव निर्वक्तुं शक्यम् । तथाऽप्युदाहृतस्थलेऽप्युक्तनिरुक्तिसम्भवात्, प्रकृतानुगुण्याय श्रुतिसूत्रप्रयोगानुसारेण च महायोगविद्वद्रूढिभ्यां ब्रह्मणि प्रवृत्तिं दर्शयितुमेवं निरुक्तम् ॥

मार्गप्रतीहारपर्यायद्वारशब्दप्रयोगे विष्णोरपत्यनिर्गमनावधित्वरूपापादानत्वमेव न तूपादानत्वमिति सूचितम् । प्रकृतित्वं प्रकृत्यादिस्त्रीशब्दप्रवृत्तिनिमित्तम् । न केवलमात्मकृतेरित्यत्रोक्तं प्रकृष्टकरणमेव प्रकृतिशब्दप्रवृत्तिनिमित्तम्[१], किन्तु [२] निरुक्तयोनित्वमपीति समुच्चये [३]चशब्दः। ततः किमित्यत आह – **तच्चेति** ॥ चस्त्वर्थः[४] ॥

यद्वा – चशब्दः प्रमाणान्तरोक्तस्त्रीरूपत्वाख्यनिमित्तसमुच्चायकः । **'तस्य'** परमात्मन[५] इत्यनुवृत्ततच्छब्दार्थोक्तिः । न त्वन्यस्येत्येवार्थः । **'हि'** यतः **'गीयते'** प्रतिपाद्यते मुख्यतः[६], अतः प्रकृतिश्च स एवेत्यन्वयः । **'भूतयोनिं'**

---

१. 'प्रकृतित्वम्' – प.
२. 'किन्तु द्वारत्वरूपं योनित्वमपि' – प.
३. 'चशब्दः । हेरर्थे वा चशब्दः ।' – प.
४. 'चस्त्वर्थः । तस्येत्यनुवृत्ततच्छब्दस्य विपरिणामाभिप्रायेणाऽह । तथा च निरुक्तयोनित्वरूपं निमित्तं त्वित्यर्थः । यद्वा' – प.
५. 'परमात्मन एव । हि यतः ।' – प.
६. 'मुख्यत इति शेषः । इति गीयत इत्यन्वयः । न त्वन्यस्येत्येवार्थः । अतस्तस्य प्रकृतित्वं तदुपलक्षितस्त्रीलिङ्गशब्दवाच्यत्वं युज्यत एव न तदयोग इत्यावृत्त्याऽन्वयः ।' – प.

प्रलये स्वोदरे निवेशितस्य ब्रह्मादिप्राणिजातस्य **'योनिं'** स्वदेहादेवोत्पादकं सूक्ष्मदेहकर्तारं यं[1] **'धीराः'** ज्ञानिनः परिपश्यन्ति, तददृश्यत्वादिगुणकमिति मुण्डकश्रुत्यर्थः ॥

भूतानामाकाशादीनां ब्रह्मादीनां वा केषाञ्चित् स्त्रीव्यवधानेन विनोत्पादनाद् भूतयोनिरित्यर्थ इति प्राञ्चः ॥

**'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।**
**सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः[2] ॥**
**उभयात्मकसूतित्वाद् वासुदेवः परः पुमान् ।**
**प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते ॥'**

**इति ब्रह्माण्डे ॥ २८ ॥**

## ॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

अव्यवधानेनोत्पत्तिद्वारत्वं[3] प्रकृत्यादिस्त्रीलिङ्गशब्दप्रयोगे निमित्तमिति कुतः ? कुतश्च तन्निमित्तं स्त्रीलिङ्गशब्दवाच्यत्वं विष्णोर्ज्ञायत इत्याशङ्कां परिहर्तुं सूत्रार्थे स्मृतिं चाऽह – **व्यवधानेनेति** ॥ **'सूतिः'** सूतिकर्तृत्वम् । तुशब्दः प्रकृतित्वं त्वित्यन्वेति । तथा च स्त्र्यादिव्यवधानेनापत्योत्पादकत्वं **'पुंस्त्वं'** पुल्लिङ्गशब्दप्रवृत्तिनिमित्तं **'प्रकृतित्वं'** तच्छब्दोपलक्षिताशेषस्त्रीलिङ्ग-शब्दप्रवृत्तिनिमित्तं त्वव्यवधानेन सूतिकर्तृत्वमिति प्रवृत्तिनिमित्तस्थिति-र्विद्वद्भिरुच्यत इत्यर्थः ॥

---

१. 'यत्' – प.
२. **'स्त्रीत्वमाहुर्मनीषिणः'** ह.।
३. '-त्पत्तिकर्तृत्वं' – प

**'स्त्रीत्वमाहुर्मनीषिणः'** इति पाठे वाक्यभेदेनान्वयः । उभयत्रेति-शब्दाध्याहारश्च कर्तव्यः । ततः किं प्रकृत इत्यत आह – **उभयेति** ॥ उभय-विधप्रसूतिकर्तृत्वादित्यर्थः । शब्दसमुच्चये च इत्यावर्तते । तत्रैक आद्यर्थे ॥

ननु सूतिकर्तृत्वमेवासिद्धम् । सुतरामुभयात्मकसूतित्वमित्यतो - **वासुदेव** इत्याह ॥ अनेन -

**'वानात् सूतेर्देवनाद् वासुदेवो**
**वासाद् द्युतेश्छादनात् क्रीडया च ।**
**बलादसुत्वाद् दातृतो वर्तनाच्च**
**तं वासुदेवं प्रवदन्ति वेदाः ॥'**

इति निरुक्तसूचनात् सूतिकर्तृत्वसिद्धिः ॥

ननु कथमेक एव हरिः प्रकृतिः पुरुष इत्यादिभिरनेकैर्विरुद्धशब्दैरभिधीयते, लोके क्वाप्यदर्शनादित्यत आह - **पर इति** ॥ **'परः'** लोकविलक्षणः पुमान् यत इति । यद्वा एक एवाभिधीयत इत्युक्ते हरेर्मुख्यतः सर्वशब्दवाच्यत्वे परः पुमानिति हेतुरुच्यते, यतः पूर्णपुरुषः ॥

**इति ब्रह्माण्ड** इत्यस्य तत्रत्यस्यानुषङ्गेणोक्तमित्यध्याहृतेनान्वयः । न च भगवतः स्त्रीरूपत्वादपि तच्छब्दवाच्यत्वमित्ययुक्तम्, **'नैनं वाचा स्त्रियं ब्रुवन्'** इति निषेधविरोधादिति वाच्यम् । तस्य केवलस्य लौकिकस्य वा स्त्रीत्वस्य ज्ञेयतानिषेधपरत्वात् । अन्यथा **'नैनमस्त्रीपुमान्'** इत्युत्तरवाक्यविरोधात् ॥

अनेन – **'हि'** यतो **'यद् भूतयोनिम्'** (मुं. १.१.६.) इति श्रुतौ स्मृतौ च स विष्णुर्योनिः स्वदेहादेवोत्पादको गीयते । योनिशब्दस्याव्यवधानेनोत्पत्ति-स्थानार्थत्वाद् योनित्वस्यैव स्त्रीशब्दप्रवृत्तिनिमित्तत्वात् । यतश्च प्रमाणान्तरे स्त्रीरूपश्च **'गीयते'** प्रतिपाद्यतेऽतः ॥

न केवलं प्रकृष्टकरणनिमित्तात् प्रकृतिप्रातिपदिकवाच्य एव सः, किन्त्वव्यवधानेनोत्पत्तिद्वारत्वरूपयोनित्वनिमित्तात् स्त्रीरूपत्वाच्च स्त्रीलिङ्ग-शब्दाभिधेयोऽपीति न तस्मिन् स्त्रीलिङ्गप्रयोगायोगः । न वा प्रकृति-शब्दोपलक्षितस्त्र्यादिशब्दान्तरे प्रकृत्यर्थानुपपत्तिरिति सूत्रार्थ उक्तो भवति[1] ॥

## ॥ इति प्रकृत्यधिकरणम् ॥ ६ ॥

१. इतः परं प.पुस्तकपत्राणि नोपलब्धानि ।

## ॥ ७. अथ एतेन सर्वेव्याख्याताधिकरणम् ॥

*(भगवतो निषेधादिवाचकशब्दबोध्यत्वप्रतिपादनम्)*

सू –

**ॐ ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ ॐ ॥२९ ॥**

**एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः । 'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च' इति महोपनिषदि[1] ।**

### ॥ ७. अथैतेन सर्वे व्याख्याताधिकरणम् ॥

अत्राधिकरणे निषेध्यनिषेधार्थाः शब्दाः समन्वीयन्ते । यद्यपि भाष्ये विषयवाक्यं नोदाहृतम् । तथाऽप्यसदादिशब्दघटितवाक्यान्तरमुदाहर्तव्यमिति चन्द्रिकोक्तेः, टीकारीत्या **'असदेव'** इत्यादिवाक्यं विषयः । अस्य सिद्धान्ते सर्वथाऽन्यपरत्वाभावेऽपि शङ्काविषयत्वमात्रेणोदाहरणं युक्तम् ॥

अत्रापि **'तत्तु समन्वयात्'** इति सर्वशब्दानां परमात्मनि समन्वय उक्तः । तन्न युज्यते । कुतः ? यतस्तदसदादिशब्दवाच्यत्वं न युज्यत इत्यत आह, इत्याद्याधिकरणवाक्यसंयोजनेन सङ्गतिविषयपूर्वपक्षान् शिष्याः ज्ञास्यन्तीत्यभिप्रेत्य सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे – **एतेनेति** ॥ सर्वसमन्वयस्यात्राकरणात् सर्वपदं सङ्कुचद्वृत्तितया व्याख्याति – **सर्व इति** ॥ पूर्वस्मादत्र चोऽनुवर्तनीय इत्याशयेनापीति प्रयुक्तवान् । न केवलं पूर्वसमन्विताः, किन्त्ववशिष्टाः शून्यादिशब्दा अपीत्यर्थः ॥

---

१. **'इति हि महोपनिषदि'** ह.

नन्वसदादिशब्दानां निषेधमुखवेद्यवस्तुवाचित्वात् कथं परमात्मनस्तद्वाच्यत्वमित्यत आह - **एष ह्येवेति** ॥ अत्र **'एष ह्येवासन्'** इत्यप्यादावुपस्कार्यम् । अदृश्य इति छ इत्यस्यार्थः । तुदित्यपि ग्राह्यम् । **'अचिन्त्यः'** अभाव्यो **'निर्गुणः'** उपादानशून्योऽप्राकृतो विनाशशून्यश्चेत्यभावशब्दार्थकथनम् । हिशब्दः प्रसिद्धौ । चस्त्वर्थो यत इत्यर्थे । तथा च **'हि'** यतः **'एषः'** भगवान् दुर्जनैरव्यक्तोऽदृश्यश्च तुच्चाचिन्त्यश्च निर्गुणोऽतः स एव मुख्यतोऽसन् तुच्छोऽभावश्चेत्युच्यत इत्यर्थः ॥

यद्वा – शून्यशब्दस्य शून्यादीत्यादिपदोपात्तानां च शब्दानामिह हरौ रूढिप्रदर्शनपरेयं समग्रा श्रुतिः । महोपनिषदीत्यस्यासदादिशब्दाः दुर्जनाव्यक्तत्वादिना निमित्तेन रूढ्या वा ब्रह्मवाचितया व्याख्याता इत्यन्वयः ॥

**'शमूनं कुरुते विष्णुरदृश्यः सन् परः स्वयम् ।**
**तस्माच्छून्य इति[१] प्रोक्तस्तोदनात्तुच्छ उच्यते ॥**
**नैष भावयितुं योग्यः केनचित् पुरुषोत्तमः ।**
**अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ॥**

**'एष ह्येव'** (महोपनिषत्) इत्यनेनैव शून्यादिशब्दानां रूढेर्दर्शितत्वादिदानीं योगवृत्तिमपि स्मृत्या दर्शयति – **शमूनमिति** ॥ यस्माद् विष्णुः **'परः सन्नेव'** सर्वोत्तमत्वेन पूर्णसुखत्वेन च सन्नेव **'शम्'** अन्यसुखं स्वयम् **'ऊनं'** स्वसुखादल्पं करोति, तस्माच्छून्य इति प्रोक्त इत्यर्थः ॥

सन्नेवेत्यनेनासत्त्वाच्छून्यशब्दार्थ इत्याशङ्का परिहृता । सन्नेवादृश्य इत्यस्योत्तरत्रान्वयः । तुच्छ इत्यावर्तते । तत्रैकं द्विखण्डम् । अन्यदखण्डम् ।

---

१. **'शून्यमिति'** ह.

तथा च यतस्तोदनाद् दुःखकर्तृत्वात् तुत्, छः छन्नः सन्नेव दुर्जनैरदृश्यो न त्वसत्त्वादतस्तुच्छ उच्यत इत्यर्थः ॥

सत्तर्कदीपावल्यां तु – लोकेऽभीष्टं वस्तु नष्टमदृश्यं वा, तद्वतः शमूनं कुरुते, तुदते च तं शमनुभवन्तम् । न च तद्भावयितुं योग्यं सुखाय, नापि तेनोपभोग्यम् । विष्णुस्तु न नष्टः, किन्तु स्वयं परः सन्नेव सर्वदा सर्वत्र सर्वोत्तमत्वेन सन्नेव दुर्जनादृश्य एव तच्छमूनं करोति, तुदते च तम् । भावयितुमयोग्यस्तेनानुपभोग्यश्च । यथा रमाऽजशङ्करादिभिरित्युक्तम् ॥

अस्मिन् पक्षे यतः छः नित्यमदृश्य एव तुत् दुःखयत्यन्यान् दुर्जनान्, अतोऽदृश्यत्वे सति तोदनात् तुच्छ उच्यत इति । छशब्दार्थस्यादृश्यत्वस्य विशेषणतया पूर्वमन्वयः । पक्षद्वयेऽप्येकानेकपदत्वं समानम् । ऐकपद्ये तुच्चासौ छश्चेति विग्रहः । यतः **'एषः'** विष्णुः कारणतयाऽऽनन्त्येन च पुरुषोत्तमः, अतो न केनचित् **'भावयितुम्'** उत्पादयितुं साकल्येन चिन्तयितुं वा योग्यः । यत एवं अत एनमभावं वदन्ति कवय इत्यर्थः । अश भोजन इत्यतः अश्यमिति रूपं, तस्य भाव अश्यत्वं, तस्य नञा सम्बन्धे नाश्यत्वादित्यस्याभक्ष्यत्वादित्यर्थः ॥

सत्तर्कदीपावलीरीत्या तु – नाकमितिवन्नाशं परमसुखं यापयतीति नाश इत्यर्थः । उच्यत इत्यनुषज्यते । न केवलमभाव इत्यादिरूपेणेत्यपेरर्थः ॥

**सर्वस्य तदधीनत्वात् तत्तच्छब्दाभिधेयता ।**
**अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥' इति महाकौर्मे[१] ॥**

निषेधमुखवेद्यवस्तुवाचिशब्दानां निषेध्यनिषेधवाचित्वेन द्विरूपत्वात् तत्र स्मृतौ निषेध्यासद्वाचिशून्यादिशब्दानामेव योगवृत्तिकथनात्, तदन्येष्व-

१. 'इति कौर्मे' ह.

व्यक्तादिषु निषेधरूपाभाववाचिनिर्गुणादिशब्देषु च तदकथनान्न तेषां हरौ वृत्तिः स्यादित्याशङ्क्योभयसाधारणं निमित्तमाह – **सर्वस्येति** ॥

एतच्चासद्वाचिशब्देष्वभाववाचिशब्देषु च सम्बध्यते । अत एव टीकायामुभयत्रेत्युक्तिः । सुधायां च निषेधनं निषेधोऽभावः । निषिध्यत इति निषेधोऽसन् तदुभयार्थाः शब्दा इत्युक्तम् । तथा च **'सर्वस्य'** असच्छून्यादिशब्दप्रवृत्तिनिमित्तस्य स्वगतस्य परगतस्य वा **'तदधीनत्वात्'** भगवत्स्वामिकत्वात् तत्तच्छब्दवाच्यता तस्यैव हरेः सर्वशब्दाभिधेयता । अत एव असच्छून्यतुच्छाभावनाशादिशब्दपरममुख्यार्थता भगवतः । अन्येषां तु तदधीनेनैव तत्तत्प्रवृत्तिनिमित्तेन हानादिव्यवहारार्थं व्यवहर्तृभिः तत्तच्छब्दप्रयोक्तृभिस्तन्मुख्यवाच्याभिज्ञैस्तत्तच्छब्दार्थता **'इष्यते'** अभ्युपगम्यत इत्यर्थः ॥

यद्वा - सर्वस्येत्येतत् **'शमूनं कुरुते'** इत्याद्युक्तहेतूपपादकत्वेन पूर्वत्र तत्तच्छब्दाभिधेयतेत्युक्तसाध्यसाधकत्वेनोत्तरत्र च सम्बध्यते । अत एव सत्तर्कदीपावल्यां स्वगतस्य परगतस्य वा शब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वादित्युक्तम् । द्रष्टुर्भावयितुर्भक्षकस्य चेश्वराधीनत्वेन स्वगताना-मदृश्यत्वाभावत्वनाशत्वादीनां तदधीनत्वं सिद्धम् । परगतनिषेध्यत्व-शून्यत्वाभावत्वादीनां त्वीशायत्तत्वं सुप्रसिद्धमेवेत्याशयः । महाकौर्मे इत्यस्य श्रूयमाणा इत्यध्याहारेण महोपनिषदि, अन्यत्र च श्रूयमाणाः शून्यादिशब्दाः **'शमूनं कुरुते'** इत्यादियोगेन स्वातन्त्र्यनिमित्तेन च विष्णुपरतया महाकौर्मे व्याख्याता इत्यन्वयः ॥

**एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन ।**

सूत्रेऽवयवप्रयोगानियमाभिप्रायेण प्रथमं प्रयुक्तस्य हेतुपदस्यानुवादमात्रस्याप्रकृतत्वादेकवचनार्थस्याविवक्षितत्वाच्चैतेनेत्यनूदित-

पदपरामृष्टमेव हेतुं दर्शयति - **एतेनेति** ॥ तस्मिन्नधीनं तदधीनं तत्स्वामिकं, यद्वा – तस्याधीनं तदधीनं तस्य भावस्तदधीनत्वं तदधीनत्वादिरूपा या युक्तयस्तत्समुदायेनेत्यर्थः । आदिपदेन **'महद्वच्च'**, **'चमसवदविशेषात्'** **'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके'** 'प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिकं गृह्यते ॥

'अवधारणार्थं सर्वस्याप्युक्तस्याऽध्यायमूलतः ।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये ॥'

इति वाराहसंहितायाम् ॥[1]॥

इति एतेन सर्वेव्याख्याताधिकरणम् ॥ ७ ॥

## ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥

## ॥ प्रथमाध्यायः समाप्तः ॥

ननु सूत्रेऽल्पाक्षरत्वविरोधिनी द्विरुक्तिः किमर्थेत्यत आह - **अवधारणार्थमिति** ॥ **'आध्यायमूलतः'** अध्यायादिमारभ्यान्तपर्यन्तमुक्तस्य सर्वस्यार्थस्यावधारणार्थमेवेति निर्णयायान्ते द्विरुक्तिं कुर्वते ज्ञानिन इत्यर्थः । भारतादिषु द्विरुक्तेरकरणादाह – **विनिर्णय इति** ॥ विशिष्टो निर्णयो यस्मात् तस्मिन् विनिर्णायकग्रन्थ इत्यर्थः । तथा च तेषां निर्णेतव्यत्वेन निर्णायकत्वाभावान्नोक्तनियमभङ्ग इति भावः । संहितायाम्

१. 'इति वाराहे' ह.

इत्यस्योक्तत्वादित्यध्याहारेण न द्विरुक्तिवैय्यर्थ्यम्, न चान्यरीत्या अध्यायसमाप्तिद्योतनार्थ इत्युपस्कृतसाध्येनान्वयः ॥

अनेन - **'एतेन'** पूर्वोक्ततदधीनत्वादिहेतुनैव **'सर्वे'** शून्यादिशब्दाः **'तत्तु'** तस्मिन् ब्रह्मण्येव तद्विषया एवेति **'व्याख्याताः'** प्रतिपादिता इति सूत्रार्थ उक्तो भवति ॥

॥ इति एतेन सर्वेव्याख्याताधिकरणम् ॥ ७ ॥

**॥ इति श्रीमत्परमहंसपरिव्राजकाचार्याणां सर्वतन्त्रस्वतन्त्राणां श्रीमद्रघुनाथतीर्थपूज्यपादानां शिष्येण श्रीमज्जगन्नाथयतिना कृतायां श्रीमद्ब्रह्मसूत्रभाष्यदीपिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥**

## ॥ समन्वयाध्यायः समाप्तः ॥ १ ॥

## ॥ ॐ ॥

॥ श्रीः ॥

श्रीजगन्नाथयतिकृता

# सूत्रदीपिका

**श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥**

**॥ श्रीगुरुभ्यो नमः ॥**

**॥ हरिः ॐ ॥**

कृष्णं रामं नारसिंहं व्यासं नत्वा गुरूनपि ।
जगन्नाथाख्ययतिना क्रियते सूत्रदीपिका ॥

## ॥ प्रथमाध्यायस्य प्रथमः पादः ॥

॥ जिज्ञासाधिकरणम् ॥ १ ॥

### १. ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ

**अथ** अध्ययनशमदमादिरूपाधिकारसम्पत्त्यनन्तरम् । **अतः** मोक्षाख्यप्रयोजनस्य सत्त्वाद् विष्णोः प्रसादाद् वा । **ओं** गुणपूर्णस्य **ब्रह्मणो** विष्णोः **जिज्ञासा** श्रवणादिरूपा कर्तव्येत्यर्थः ॥ १ ॥

॥ जन्माधिकरणम् ॥ २ ॥

### २. ॐ जन्माद्यस्य यतः ॐ

**अस्य** प्रमितजीवजडात्मकप्रपञ्चस्य **यतः** यस्माद् **जन्मादि** सृष्ट्याद्यष्टकम् । भवतीति श्रुतं तदेव ब्रह्म नान्यदित्यर्थः ॥ १ ॥

॥ शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

## ३. ॐ शास्त्रयोनित्वात् ॐ

नानुमानतः रुद्रादेर्जगत्कारणत्वं कल्पनीयम् । कुतः **शास्त्रयोनित्वात्,** शास्त्रम् ऋगादिरूपं योनिः ज्ञप्तिकारणं यस्य तच्छास्त्रयोनि । तस्य भावः शास्त्रयोनित्वम्, तस्मात् जगत्कारणं ब्रह्म । शास्त्रैकसमधिगम्यत्वादित्यर्थः ॥ १ ॥

॥ समन्वयाधिकरणम् ॥ ४ ॥

## ४. ॐ तत्तु समन्वयात् ॐ

तुशब्द एवार्थे । **तदेव** विष्णवाख्यं ब्रह्मैव सं मुख्यतः सर्वशास्त्रयोनि न रुद्रादिः । कुतः? **समन्वयात्** समीचीनोपक्रमादितात्पर्यलिङ्गादित्यर्थः ॥१॥

॥ ईक्षत्यधिकरणम् ॥ ५ ॥

## ५. ॐ ईक्षतेर्नाशब्दम् ॐ

तद् ब्रह्म । **अशब्दं न,** शब्दावाच्यं न, किन्तु वाच्यमेव । कुतः? **ईक्षतेः** । ईक्षतिर्ज्ञानम् तद्विषयत्वादित्यर्थः ॥ १ ॥

## ६. ॐ गौणश्चेन्नात्मशब्दात् ॐ

**गौणः** सत्त्वादिगुणबद्धो जीव एव । 'स एतस्मात्'[१] इति ईक्षतिश्रुत्युक्त इति **चेन्न** । कुतः? **आत्मशब्दात्** । ईक्षणीयवस्तुनि आत्मानं पश्येदित्यात्म-शब्दश्रवणादित्यर्थः ॥ २ ॥

## ७. ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ

**तन्निष्ठस्य** परमात्मज्ञानिनः । **मोक्षोपदेशात्** 'यस्यानुवित्तः'[२] इत्यादौ मोक्षस्य श्रुतत्वात् । आत्मशब्दमुख्यवाच्यो न जीव इत्यर्थः ॥ ३ ॥

---

१. '**स एतस्माज्जीव**घनात् परात् परं पुरिशयं पुरुषमीक्षते' (प्र.५.५)

२. '**यस्यानुवित्तः** प्रतिबुद्ध आत्मा अस्मिन् सन्दोहे गहने प्रविष्टः ।
स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव' (बृ.उ.६–४–१३.)

## ८. ॐ हेयत्वावचनाच्च ॐ

**हेयत्वावचनाद्** ब्रह्मणो मोक्षार्थं प्राधान्येनाज्ञेयत्वरूपहेयत्वस्याप्रतिपादनात् प्रत्युत 'जानथेति' अहेयत्ववचनाच्च न गौणः आत्मशब्दवाच्यः। किन्तु निर्गुणो विष्णुरेवेत्यर्थः ॥ ४ ॥

## ९. ॐ स्वाप्ययात् ॐ

**स्वस्य** स्वस्मिन् **अप्ययात्** अप्ययपदोक्तलयवचनात्। आत्मानं विलापयतीति श्रुत्युक्तो निर्गुण एव न गौणः। अत एव चासौ शब्दवाच्य इत्यर्थः ॥ ५ ॥

## १०. ॐ गतिसामान्यात् ॐ

**गते**र्नानाशाखाजन्यज्ञानस्य। **सामान्यात्** एकरूपत्वश्रवणात्। न विष्णोरन्यः कारणत्वेन शाखान्तरप्रतिपाद्य इत्यर्थः ॥ ६ ॥

## ११. ॐ श्रुतत्वाच्च ॐ

'एको देवः'[1] इति श्रुत्युक्तत्वाच्च न शब्दवाच्यं ब्रह्मेत्यर्थः ॥ ७ ॥

॥ आनन्दमयाधिकरणम् ॥ ६ ॥

## १२. ॐ आनन्दमयोऽभ्यासात् ॐ

**आनन्दमयादिशब्दवाच्यो** विष्णुरेव न प्रकृत्यादिः। कुतः? **अभ्यासात्** प्रतिप्रकरणमानन्दमयादौ ब्रह्मशब्दश्रवणादित्यर्थः ॥ १ ॥

## १३. ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ

**विकारशब्दात्** विकारार्थकमयट्शब्दाद् आनन्दमयादिर्विष्णुर्नेति **चेन्न**। कुतः? **प्राचुर्यात्** मयट्शब्दस्य प्राचुर्यपदोक्तपूर्णत्वाभिधायकत्वादित्यर्थः ॥ २ ॥

---

१. 'एको देवः सर्वभूतेषु गुढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षस्सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वे.६–११)

## १४. ॐ तद्धेतुव्यपदेशाच्च ॐ

**चः** समुच्चये । **तस्य** आनन्दमयस्य विष्णुत्वे लोकचेष्टकत्वाख्यहेतोर्व्यप-देशात् । 'को ह्येवान्यात्'[१] इति श्रुतौ उक्तत्वाच्च आनन्दमयो विष्णुरेवेत्यर्थः ॥ ३ ॥

## १५. ॐ मान्त्रवर्णिकमेव च गीयते ॐ

यतो **मान्त्रवर्णिकं** 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णोक्तं ब्रह्म **गीयते** आनन्दमयादिशब्दैः प्रतिपाद्यते । अत आनन्दमयादिशब्दवाच्यं ब्रह्मैवेत्यर्थः ॥ ४ ॥

## १६. ॐ नेतरोऽनुपपत्तेः ॐ

**इतरः** चतुर्मुखादिः । **न** । कुतः? **अनुपपत्तेः** 'ब्रह्मविदाप्नोति परम्'[२] इति मोक्षजनकज्ञानविषयत्वायोगादित्यर्थः ॥ ५ ॥

## १७. ॐ भेदव्यपदेशाच्च ॐ

चतुर्मुखादेरानन्दमयस्य **भेदकधर्मोक्तेश्च** नाऽनन्दमय इतर इत्यर्थः ॥ ६ ॥

## १८. ॐ कामाच्च नानुमानापेक्षा ॐ

अद्वैतश्रुत्यनुकूलानुमानस्याभावात् केवलानुमानस्य च **कामात्** इच्छाम-नुसृत्य प्रवृत्तत्वा**न्नानुमानापेक्षा** अतीन्द्रियार्थविषये शुष्कानुमानापेक्षा न कार्येत्यर्थः ॥ ७ ॥

## १९. ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ

युक्तिसमुच्चये चशब्दः । यतः **अस्मिन्** आनन्दमयप्रकरणे मोक्षेऽप्यस्य जीवस्य । **तद्योगं** आनन्दमयादिना योगं सम्बन्धम् । **शास्ति** श्रुतिः प्रतिपादयति । अतोऽपि आनन्दमयादिः ब्रह्मैव, न देहादिरित्यर्थः ॥ ८ ॥

---

१. '**को ह्येवान्यात्** कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' (तै.२–७)

२. (तैत्तरीय.३.२.१)

॥ अन्तःस्थत्वाधिकरणम् ॥ ७ ॥

## २०. ॐ अन्तस्तद्धर्मोपदेशात् ॐ

**अन्तः** 'अन्तः प्रविष्टम्'[1] इति हृदयान्तः श्रुतं ब्रह्मैव न इन्द्रादिः । कुतः? **तद्धर्मोपदेशात्** तस्मिन्नन्तः श्रुते क्षीराब्धिमध्यवर्तित्व, प्रलयोदधिस्थितत्व, ब्रह्माण्डवीर्यत्वादिरूपविष्णुधर्माणाम् 'अन्तः समुद्रे'[2] इत्यादौ श्रुतत्वादित्यर्थः ॥ १ ॥

## २१. ॐ भेदव्यपदेशाच्चान्यः ॐ

न केवलमन्तस्थो विष्णुः किन्तु इन्द्रादिभ्योऽ**न्यश्च** । कुतः? **भेदव्यपदेशात्** तस्य तदन्तर्यामित्वतत्प्रेरकत्वादिरूपभेदकधर्मश्रवणादित्यर्थः ॥ २ ॥

॥ आकाशाधिकरणम् ॥ ८ ॥

## २२. ॐ आकाशस्तल्लिङ्गात् ॐ

**आकाशः** आकाशशब्दवाच्यः विष्णुरेव, न प्रसिद्धाकाशः । कुतः? **तल्लिङ्गात्** [3]छन्दोगश्रुत्युक्ताकाशे परोवरीयस्त्वादिरूपविष्णुलिङ्गस्य श्रवणादित्यर्थः ॥१॥

॥ प्राणाधिकरणम् ॥ ९ ॥

## २३. ॐ अत एव प्राणः ॐ

'तद्वै त्वं प्राणो अभवः'[4] इत्युक्तः **प्राणो** विष्णुरेव नान्यः । कुतः? **अत एव** 'श्रीश्च ते'[5] इति श्रीपतित्वलिङ्गादेव इत्यर्थः ॥ १ ॥

---

१. '**अन्तःप्रविष्टं** कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः' (तै.आ.३-११)

२. '**अन्तःसमुद्रे** मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे' (तै.३.११.१)

३. 'अस्य लोकस्य का गतिरित्याकाश इति होवाच', 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छां.१–९.)

४. '**तद्वै त्वं प्राणो अभवः** महान् भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान् प्राणयो नव' (तै.आ.३.१४)

५. '**श्रीश्च ते** लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे' (तै.आ.३.१३.)

॥ ज्योतिरधिकरणम् ॥ १० ॥

## २४. ॐ ज्योतिश्चरणाभिधानात् ॐ

**ज्योतिः** ज्योतिशब्दवाच्यं ब्रह्मैव नत्वन्यत्। कुतः? **चरणाभिधानात्** कर्णादीनां विचरणाभिधानात्। 'वि मे कर्णा'[१] इति ज्योतिषः साकल्येन कर्णादिविदूरत्वश्रवणादित्यर्थः ॥ १ ॥

॥ छन्दोभिधानाधिकरणम् ॥ ११ ॥

## २५. ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॐ

**छन्दोभिधानात्।** ननु छन्दोगश्रुतिस्थगायत्रीपदेन चतुर्विंशत्यक्षरात्मकछन्दसः प्रतिपादनात् गायत्रीशब्दवाच्यो विष्णुर्नेति चेन्न। कुतः? **तथाहि दर्शनम्।** हि यस्मात् **तथा** गानत्राणकर्तृत्वनिमित्तेन दर्शनं विष्णोः गायत्रीशब्दवाच्यत्वप्रतिपादिका 'गायति त्रायति च'[२] इति श्रुतिरस्ति। तस्मात् व्यर्थं गायत्रीपदेन विष्णोरभिधानमित्यत उक्तं तथेत्यादि। **तथा चेतोर्पणनिगदात्** विष्णोः **तथा** गायत्र्यादिशब्दप्रवृत्तिनिमित्तवत्त्वेन **चेतसि अर्पणाय** उपासनाय। **निगदात्** श्रुतौ प्रतिपादनादित्यर्थः। तथा च न वैयर्थ्यमिति भावः ॥ १ ॥

## २६. ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ

एवमित्यस्याऽवृत्तिः। एवं गायत्रीशब्दवाच्यं ब्रह्मेत्येवमेव युक्तम्। कुतः? एवं भूतादिपादव्यपदेशोपपत्तेः। 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'[३] इत्येवंरूपभूतामृतांशवत्त्वोक्तेश्च तस्य च विष्णावे**वोपपत्तेः** अन्यत्र अनुपपत्तेश्चेत्यर्थः ॥ २ ॥

---

१. '**वि मे कर्णा** पतयतो विचक्षुर्वी३दं ज्योतिर्हृदय आहितं यत्।
वि मे मनश्चरति दूर आधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये' (ऋ.६–९–६.)

२. (छां.३–१२.१.) ३.(छां.३–१२.६.)

## २७. ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ

**उपदेशभेदात्** गायत्रीज्योतिषोः द्युस्थत्व 'त्रिपादस्यामृतं दिवि'[1] दिवः परत्व 'परो दिवः'[2] रूपविरुद्धधर्मबोधकश्रुतिभेदा**न्नेति चेत्** तद्द्वयं विष्णवाख्य-मेकं वस्तु न किन्तु भिन्नमेवेति **चेन्न** । कुतः? **उभयस्मिन्** श्रुतिवाक्येऽपि एकस्य प्रतिपाद्यत्वेऽपि **अविरोधात्** । त्रिसप्तलोकविवक्षया विरोधाभावा-दित्यर्थः ।। ३ ।।

।। पादान्त्यप्राणाधिकरणम् ।। १२ ।।

## २८.ॐ प्राणस्तथाऽनुगमात् ॐ

तथा 'तद्वै त्वं'[3] इति तैत्तिरीयोक्तप्राणवत् 'ता वा एताः'[4] इति ऐतरेयोक्त-**प्राणोऽपि** विष्णुरेव । कुतः? **अनुगमात्** । देवतोपास्यत्वादिविष्णुलिङ्गब्रह्म-शब्दानां असकृच्छ्रवणादित्यर्थः ।। १ ।।

## २९. ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ

द्वितीयार्थे षष्ठी । **वक्तुः** बृहतीसहस्रवक्तारं विश्वामित्रं प्रति इन्द्रेणाऽ-**त्मोपदेशात्** । आत्मनः स्वस्य प्राणतयोपदेशाद् इन्द्र एवायं प्राणः **न** विष्णुरिति चेत् । नेति शेषः । तस्याऽवृत्तिः । अनुगमादित्यनुवर्तते । तथाच प्रागुक्तानुगमहेतोः नेन्द्रः प्राणः । तथा सत्युपदेशविरोध इत्यपि न । कुतः? यस्मात् अस्मिन् प्रकरणे भगवतः **अध्यात्मसम्बन्धभूमा** इन्द्रविश्वा-मित्रादिरूपबहुदेहसम्बन्धः उक्तोऽस्ति तस्मादित्यर्थः । **यद्वा हि** यस्मात् अस्मिन्निन्द्रे । **अध्यात्मसम्बन्धभूमा** । अधि अधिकस्याऽत्मनः सम्बन्धस्याऽ-वेशस्य भूमा बाहुल्यं विद्यते तस्मादित्यर्थः ।। २ ।।

---

१. (छां.३.१२.६.) २. (छां.३–१३.७.) ३. (तै.आ.३–१४.४.)

४. 'ता वा एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' (ऐ.आ.२.१.४)

## ३०. ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ

तुशब्द एवार्थे । **वामदेववत्** यथा अन्तर्यामिविवक्षया वामदेवर्षिः 'अहं मनुरभवं' इति स्वस्य मनुसूर्याद्यैक्यमाह तद्वत् । **शास्त्रदृष्ट्या** शास्ति सर्वमिति शास्त्रमन्तर्यामी तद्दृष्ट्या तद्विवक्षयैव**ोपदेशः** प्राणोऽहमिति व्यपदेशः । नत्वैक्येनेत्यर्थः ॥ ३ ॥

## ३१.ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रित-त्वादिह तद्योगात् ॐ

**जीवमुख्यप्राणलिङ्गात्** शतायुष्ट्वादिजीवलिङ्गानां इन्द्रियदेवैः संवादादि-रूपमुख्यप्राणलिङ्गानां च श्रवणात् 'तावन्ति शतसंवत्सरस्य'[१], 'ता अहिंसन्ता–'[२] इति प्राणो अन्य एव न विष्णुरिति चेन्न । कुतः? **अनुग-मात्** । न च लिङ्गविरोधः । तल्लिङ्गानां अन्तर्यामिविषयत्वोपपत्तेः इत्यादि-कमध्याहार्यम् । किमर्थमन्तर्यामिकथनमित्यत उक्तम्– **उपासात्रैविध्या-दिति** । अन्तर्बहिःसर्वगतभेदेन ब्रह्मोपासनस्य त्रिविधत्वात् । इह प्रकरणे । तत्त्रैविध्यस्य **आश्रितत्वात्** उक्तत्वात् **तद्योगात्** तेषां अधिकारिणां त्रिविधोपासनायोग्यत्वादित्यर्थः । तथा च तत्तच्छब्दैस्तत्तदधिकारि-भेदेनोपासनार्थं अन्तर्यामिकथनं युक्तमिति भावः ॥ ४ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**प्रथमाध्यायस्य प्रथमः पाद ॥ १ ॥ १ ॥**

—०—

१. 'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' (ऐ.आ.२–२–४.)

२. **'ता अहिंसन्ताहमुक्थमहमुक्थमस्मि'** (ऐ.आ.२-१-४.)

# प्रथमाध्यायस्य द्वितीयः पादः

॥ सर्वगतत्वाधिकरणम् ॥ १ ॥

## १ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ

तत्त्विति वर्तते । **सर्वत्र** पृथिव्यादिषु उच्यमानं वस्तु तत्तु नारायणाख्यं ब्रह्मैव न त्वन्यत् । कुतः? **प्रसिद्धोपदेशात्** 'एतमेव ब्रह्म'[१] इति सर्वगते वस्तुनि नारायणवाचित्वेन श्रुत्यादिप्रसिद्धब्रह्मशब्दश्रवणादित्यर्थः ॥ १ ॥

## २. ॐ विवक्षितगुणोपपत्तेश्च ॐ

चः समुच्चयेऽवधारणे वा । सर्वगते । श्रुत्येति शेषः । तथाच **विवक्षितानामितः** परं सर्वगते श्रुत्या तन्निष्ठतया वक्तुं योग्यानां वक्ष्यमाणानां वा अश्रुतत्वादि-गुणानां विष्णोरेव योग्यत्वेन तस्मिन्नेवो**पपत्तेः** अन्यत्रानुपपत्तेश्च विष्णुरेव सर्वगत इत्यर्थः ॥ ३ ॥

## ३. ॐ अनुपपत्तेस्तु न शारीरः ॐ

तुशब्द एवार्थे । **शारीरो जीवः** । आदित्यो वा । **न** सर्वगतः । कुतः? **अनुपपत्तेः** एकस्य जीवस्य सर्वशरीरस्थत्वायोगादित्यर्थः ॥ ३ ॥

## ४. ॐ कर्मकर्तृव्यपदेशाच्च ॐ

सर्वगते वस्तुनि 'आत्मानम्'[२] इति **कर्मत्वस्य** जीवे च शंसतीति तद्विरुद्ध-**कर्तृत्वस्य** व्यपदेशादुक्तत्वाच्च न जीवः सर्वगत इत्यर्थः ॥ ४ ॥

---

१. **'एतमेव ब्रह्म** इत्याचक्षते' (ऐ.आ.३–२–३–१२.)

२. **'आत्मानं** परस्मै शंसति' (ऐ.आ. ३–२–३)

## ५. ॐ शब्दविशेषात् ॐ

‘एतमेव ब्रह्म’[१] इति वाक्ये ब्रह्मशब्दस्यावधारणार्थकैव**शब्दाख्यविशेषणवत्त्वात्** ब्रह्मशब्दो न जीवपर इत्यर्थः ॥ ५ ॥

## ६. ॐ स्मृतेश्च ॐ

चः समुच्चये । न केवलं श्रुत्युक्तत्वात् ब्रह्मशब्दो न जीवपर इति किन्तु ‘अहमात्मा गुडाकेश’[२] इत्यादि**स्मृतिसद्भावाच्च** ब्रह्मशब्दो न जीवपर इत्यर्थः ॥ ६ ॥

## ७. ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ

**अर्भकौकस्त्वात्** ‘सर्वेषु भूतेषु’[३] इति सर्वगतवस्तुनः सर्वप्राणिहृदयाकाशरूपाल्पस्थानत्वकथनात् । **तद्व्यपदेशात्** । तस्य जीवस्य तच्छ्रुतिलिङ्गादिना व्यपदेशात् । उक्तत्वाच्च । **नेति चेत्** ब्रह्मैव सर्वगतमित्युक्तं नेति **चेन्न** । कुतः तेषां विष्णावेवोपपत्तिरिति शेषः । न च वैयर्थ्यम् । **एवं निचाय्यत्वात्** । एवमर्भकौकस्त्वादिरूपेण विष्णोरेवोपास्यत्वात् । तथाच न वैयर्थ्यमिति भावः । श्रुतिलिङ्गादीनां ब्रह्मपरत्वेन न तद्विरोध इति भावः । व्याप्तस्य विष्णोः कथमल्पस्थानस्थितिरित्यत उक्तं **व्योमवच्चेति** । यथाऽऽकाशस्य व्याप्तस्यापि गृहाद्येकदेशावस्थितिः तद्वद् विष्णोरपीत्यर्थः ॥ ७ ॥

## ८. ॐ सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ॐ

यतो ब्रह्मणः व्योमवत् सर्वजीवशरीरस्थत्वे **सम्भोगप्राप्तिः** समानभोगप्राप्तिरित्यतो बाधकान्न ब्रह्म सर्वगतमिति **चेन्न** । कुतः **वैशेष्यात्** विष्णोः

---

१. ‘एतमेव ब्रह्म इत्याचक्षते’ (ऐ.आ.३.२.३.१२.)

२. **‘अहमात्मा गुडाकेश** सर्वभूताशयस्थितः’ (भ.गीता.१०.२०), ‘गामाविश्य च भूतानि धारयाम्यहमोजसा’ (१५.१३)

३.(ऐ.आ.३–२–२–१२)

सामर्थ्यविशेषवत्त्वादित्यर्थः । तथा च न तस्य जीवसमानभोगप्राप्तिरिति भावः ॥ ८ ॥

॥ अत्तृत्वाधिकरणम् ॥ २ ॥

## ९. ॐ अत्ता चराचरग्रहणात् ॐ

**अत्ता** 'सर्वं वा अत्ति'[१] इत्युक्तसर्वात्ता विष्णुरेव न त्वदितिः । कुतः? **चराचरग्रहणात्** चराचरस्य चेतनाचेतनात्मकप्रपञ्चस्य 'सर्वम्' इति श्रुतौ अद्यतयोक्तत्वादित्यर्थः ॥ १ ॥

## १०. ॐ प्रकरणाच्च ॐ

'नैवेह किञ्चन' इति विष्णु**प्रकरणबलाच्च** विष्णुरेव अत्तेत्यर्थः ॥ २ ॥

॥ गुहाधिकरणम् ॥ ३ ॥

## ११. ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ

तत्त्विति वचनविपरिणामेनानुवर्तते । **आत्मानौ** आदेयं मातीति व्युत्पत्त्या 'ऋतं पिबन्तौ'[२] इति श्रुतिस्थपिबच्छब्दोदितशुभकर्मफलभोक्तारौ आत्मान्तरात्माख्यविष्णुरूपे एव नतु जीवेश्वरौ । कुतः? **हि** यस्मात् तौ **गुहां प्रविष्टौ** हृदयगुहां प्रविष्टौ तस्मादित्यर्थः । हिशब्देन हृदयगुहास्थितत्वलिङ्गस्य 'यो वेद'[३] इति श्रुतिप्रसिद्धिं सूचयति । द्विरूपतया शरीरहृदयगुहास्थितत्वे प्रमाणमाह– **तद्दर्शनादिति** । तस्य हरेः द्विरूपतया शरीरहृदयगुहास्थितत्वस्य तस्य 'घर्मा समन्ता'[४] इति श्रुतावुक्तत्वादित्यर्थः ॥ १ ॥

---

१. 'स यद्यदेवासृजत तत्तदत्तुमध्रियत **सर्वं वा अत्ती**ति तददितेरदितित्वम्' (बृ.३.२.५)

२. '**ऋतं पिबन्तौ** सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः' (कठ.१३–१)

३. '**यो वेद** निहितं गुहायाम्' (तै.उ.२–१)

४. '**घर्मा समन्ता** त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' (ऋ.१०–११४–१)

## १२. ॐ विशेषणाच्च ॐ

चः युक्तिसमुच्चये । 'यः सेतुः'[१] इति एकवचनेन **विशेषणात्** एक एव पाता स च सेतुत्वब्रह्मत्वादिना विशेषितत्वात् विष्णुरेव न जीव इत्यर्थः ।। २ ।।

।। अन्तराधिकरणम् ।। ४ ।।

## १३. ॐ अन्तर उपपत्तेः ॐ

**'य एषोऽन्तरक्षिणि'**[२] इति श्रुत्युक्तोऽन्तरः चक्षुरन्तःस्थितो विष्णुरेव न त्वग्निः । कुतः? **उपपत्तेः एतदमृतत्वब्रह्मशब्दादीनां** अन्तरे श्रवणात् । तेषां च विष्णावेवोपपत्तेरित्यर्थः ।। १ ।।

## १४. ॐ स्थानादिव्यपदेशाच्च ॐ

ब्रह्म**स्थान**भूताक्षिशक्तेः तदधिष्ठातृब्रह्मशक्तेश्च । **व्यपदेशात्** 'सर्पिर्वा उदकं वा सिञ्चति'[३] इत्युक्तत्वाच्चक्षुरन्तःस्थो विष्णुरेवेत्यर्थः ।। २ ।।

## १५. ॐ सुखविशिष्टाभिधानादेव च ॐ

चः समुच्चये । **सुखविशिष्टाभिधानात्** । 'कं ब्रह्म'[४] इत्यादि प्रकरणे विशिष्ट-सुखस्य पूर्णसुखस्याभिधानादेव चक्षुरन्तरो विष्णुरेव किमु 'खं ब्रह्म' इति पूर्णज्ञानादपीत्यर्थः ।। ३ ।।

## १६. ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ

**श्रुतोपनिषदां** श्रुतमतध्यातैतद्विद्यानां पुंसाम् । **केन** वायुना । कयोः कार्यपर-ब्रह्मणोः । **गतेः** प्राप्तेः । 'स एनान् ब्रह्म गमयति'[५] इति श्रुता**वभिधानाच्च** चक्षुरन्तरो विष्णुरेवेत्यर्थः ।। ४ ।।

---

१. '**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्**' (कठ.१–३–२)

२. '**य एषोऽन्तरक्षिणि** पुरुषो दृश्यते' (छा.४.१५)

३. 'तद्यदस्मिन् **सर्पिर्वोदकं वा सिञ्चति** वर्त्मनी एव गच्छति' (छां.४–१५–१)

४. 'प्राणो ब्रह्म **कं ब्रह्म** खं ब्रह्म' (छां.४–१०) ५.(छां.४–१५)

## १७. ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ

इतरः अग्निः । चक्षुरन्तरो **न** किन्तु विष्णुरेव । कुतः **अनवस्थितेः** जीवस्याग्नेर्जीवान्तरनियामकत्वे तस्यापि जीवत्वाविशेषात् तस्यापि नियामकान्तराभ्युपगमे तस्याप्येवमित्यन**वस्थानात्** । अग्न्यादिजीवस्य जीवान्तरनियामकत्वा**सम्भवाच्चे**त्यर्थः ॥ ५ ॥

॥ अन्तर्याम्यधिकरणम् ॥ ५ ॥

## १८. ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ

'एष आत्माऽन्तर्यामी'[१] इति श्रुत्युक्तो**ऽन्तर्यामी** विष्णुरेव न प्रधानादिः । कुतः ? **अधिदैवादिषु** अधिदैवाध्यात्माधिभूतादिप्रकरणेषु । **तद्धर्मव्यपदेशात्** तस्मिन् अन्तर्यामिणि । तस्य 'यं पृथिवी न वेद'[१] इति श्रुतौ उक्तस्याविदितत्वादिब्रह्मधर्मस्य व्यपदेशाद् उक्तत्वादित्यर्थः ॥ १ ॥

## १९. ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ

चः समुच्चये । **स्मार्तं** कापिलस्मृत्युक्तम् । प्रधानं जीवश्च अन्तर्यामी **न** । कुतः? **अतद्धर्माभिलापात्** तद्धर्माणां प्रधानजीवधर्माणां त्रिगुणत्वसंसारित्वादीनाम् । अनभिलापात् अनुक्तत्वादित्यर्थः ॥ २ ॥

## २०. ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ

चः नञोऽनुकर्षणार्थः । **हि** यस्मात् । **उभये** माध्यन्दिनाः काण्वाश्च 'आत्मनोऽन्तरः'[२], 'विज्ञानादन्तरः'[३] इति एवं जीवं अन्तर्यामिणः सकाशाद् भिन्नत्वेनाधीयते पठन्ति । तस्माच्छारीरो जीवश्च नान्तर्यामीत्यर्थः ॥ ३ ॥

---

१. 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष **त आत्माऽन्तर्याम्यमृतः**' (बृ.५–७–३)

२. 'य आत्मनि तिष्ठन्**नात्मनोऽन्तरो** यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृ.माध्यन्दिनपाठः)

३. 'यो विज्ञाने तिष्ठन् **विज्ञानादन्तरो** यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्' (बृ.५–७.२२)

॥ अदृश्यत्वाधिकरणम् ॥ ६ ॥

## २१. ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ

**अदृश्यत्वादिगुणकः** 'यत्तदद्रेश्यम्'[१] इति श्रुत्युक्तादृश्यत्वादिधर्मविशिष्टाक्षरशब्दवाच्यो विष्णुरेव न प्रकृत्यादिः । कुतः? **धर्मोक्तेः** ऋगादिपरविद्याविषयत्वरूपविष्णुधर्मस्य 'यया'[२] इति श्रुत्युक्तत्वादित्यर्थः ॥ १ ॥

## २२. ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ

चः समुच्चये । **इतरौ** प्रकृतिद्वयम् । विरिञ्चरुद्रौ च **ना**दृश्यत्वादिगुणकौ । कुतः? **विशेषणभेदव्यपदेशाभ्याम्** । प्रतिज्ञाद्वये क्रमेणैकैकहेत्वन्वयः । सार्वज्ञादिविशेषणात् । 'तस्मादेतत्'[३] इति अदृश्यत्वादिगुणकाक्षराद् विरिञ्चरुद्रयोर्भेदोक्तेश्चेत्यर्थः ॥ २ ॥

## २३. ॐ रूपोपन्यासाच्च ॐ

'यदा पश्यः पश्यते'[४] इति विष्ण्वसाधारणस्वर्णरूपप्रतिपादनाच्चादृश्यत्वादिगुणको विष्णुरेवेत्यर्थः ॥ ३ ॥

॥ वैश्वानराधिकरणम् ॥ ७ ॥

## २४. ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ

वैश्वानरः 'यस्त्वेतम्'[५] इत्यादि वाक्यगतवैश्वानरादिशब्दवाच्यो विष्णुरेव न त्वग्निः । कुतः? साधारणशब्दविशेषात् अग्नाविष्ण्वोः साधारणस्य वैश्वा-

---

१. '**यत्तदद्रेश्यम**ग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं.१.–१.६)

२. 'अथ परा **यया** तदक्षरमधिगम्यते' (मुं.१–१–५)

३. '**तस्मादेतद्** ब्रह्म नाम रूपमन्नं च जायते' (मुं.१–१–९)

४. '**यदा पश्यः** पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मुं.३.१.३)

५. '**यस्त्वेतमेवं** प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.५.१८.१)

नरशब्दस्य 'आत्मानं वैश्वानरं' इति श्रुतावात्मशब्देन विशेषितत्वादित्यर्थः ॥ १ ॥

## २५. ॐ स्मर्यमाणमनुमानं स्यादिति ॐ

इति **स्मर्यमाणं** 'अहं वैश्वानरो भूत्वा'[1] इति स्मृत्युक्तं विष्णोर्वैश्वानरत्वं, **अनुमानं** वैश्वानरविद्यायाः गीतोक्तभगवत्परत्वस्यानुमापकं स्याद् भवेदित्यर्थः ॥ २ ॥

## २६. ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॐ

युक्तिसमुच्चये चशब्दः । **शब्दादिभ्यः** अग्निशब्दहोमाधिकरणत्वलिङ्गादित्यर्थः । **अन्तःप्रतिष्ठानात्** पाचकत्वेन शरीरान्तरावस्थानाच्च वैश्वानरो न विष्णुः, किन्तु अग्निरेवेति **चेन्न**। कुतः? तथा **दृष्ट्युपदेशात्** तथा अग्न्यादिनामलिङ्गकर्मवत्त्वेन दृष्ट्युपदेशाद् उपासनोपदेशादित्यर्थः । तथाच अग्न्यादिश्रुतिलिङ्गानां विष्णौ सवकाशत्वान्न तद्विरोध इति भावः । किञ्चात्रोक्तात्मत्वब्रह्मत्वादीनां अग्न्यादाव**सम्भवाच्च** वैश्वानरो विष्णुरेव । **अपिच** यतः छन्दोगाः एनं वैश्वानरं **पुरुषविधं** पुरुषसूक्तप्रतिपाद्यनारायणसमानगुणकमेव**अधीयते**ऽभिदधति । अतोऽपि विष्णुरेवेत्यर्थः । चशब्देन पुरुषसूक्तस्य विष्णुपरत्वं बहुप्रमाणसिद्धमिति सूचितम् ॥ ३ ॥

## २७. ॐ अत एव न देवता भूतं च ॐ

**देवता** अग्न्यादिरूपा । **भूतं** तदभिमन्यमानतेजोभूतं च वैश्वानरशब्दवाच्यं **न** । कुतः? अत एव निरवकाशात्मशब्दादिहेतोरेवेत्यर्थः ॥ ४ ॥

## २८. ॐ साक्षादप्यविरोधं जैमिनिः ॐ

---

१. 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' (भ.गीता.१५–१४)

॥ अदृश्यत्वाधिकरणम् ॥ ६ ॥

## २१. ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ

**अदृश्यत्वादिगुणकः** 'यत्तदद्रेश्यम्'[१] इति श्रुत्युक्तादृश्यत्वादिधर्मविशिष्टाक्षरशब्दवाच्यो विष्णुरेव न प्रकृत्यादिः । कुतः? **धर्मोक्तेः** ऋगादिपरविद्याविषयत्वरूपविष्णुधर्मस्य 'यया'[२] इति श्रुत्युक्तत्वादित्यर्थः ॥ १ ॥

## २२. ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ

चः समुच्चये । **इतरौ** प्रकृतिद्वयम् । विरिञ्चिरुद्रौ च **न**ादृश्यत्वादिगुणकौ । कुतः? **विशेषणभेदव्यपदेशाभ्याम्** । प्रतिज्ञाद्वये क्रमेणैकैकहेत्वन्वयः । सार्वज्ञादिविशेषणात् । 'तस्मादेतत्'[३] इति अदृश्यत्वादिगुणकाक्षराद् विरिञ्चिरुद्रयोर्भेदोक्तेश्चेत्यर्थः ॥ २ ॥

## २३. ॐ रूपोपन्यासाच्च ॐ

'यदा पश्यः पश्यते'[४] इति विष्ण्वसाधारणस्वर्णरूपप्रतिपादनाच्चादृश्यत्वादिगुणको विष्णुरेवेत्यर्थः ॥ ३ ॥

॥ वैश्वानराधिकरणम् ॥ ७ ॥

## २४. ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ

वैश्वानरः 'यस्त्वेतम्'[५] इत्यादि वाक्यगतवैश्वानरादिशब्दवाच्यो विष्णुरेव न त्वग्निः । कुतः? साधारणशब्दविशेषात् अग्नाविष्ण्वोः साधारणस्य वैश्वा-

---

१. '**यत्तदद्रेश्यम**ग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं.१.-१.६)

२. 'अथ परा **यया** तदक्षरमधिगम्यते' (मुं.१-१-५)

३. '**तस्मादेतद्** ब्रह्म नाम रूपमन्नं च जायते' (मुं.१-१-९)

४. '**यदा पश्यः** पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मुं.३.१.३)

५. '**यस्त्वेतमेवं** प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.५.१८.१)

नरशब्दस्य 'आत्मानं वैश्वानरं' इति श्रुतावात्मशब्देन विशेषितत्वादित्यर्थः ॥ १ ॥

## २५. ॐ स्मर्यमाणमनुमानं स्यादिति ॐ

इति **स्मर्यमाणं** 'अहं वैश्वानरो भूत्वा'[1] इति स्मृत्युक्तं विष्णोर्वैश्वानरत्वं, **अनुमानं** वैश्वानरविद्यायाः गीतोक्तभगवत्परत्वस्यानुमापकं स्याद् भवेदित्यर्थः ॥ २ ॥

## २६. ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॐ

युक्तिसमुच्चये चशब्दः । **शब्दादिभ्यः** अग्निशब्दहोमाधिकरणत्वलिङ्गादित्यर्थः । **अन्तःप्रतिष्ठानात्** पाचकत्वेन शरीरान्तरावस्थानाच्च वैश्वानरो न विष्णुः, किन्तु अग्निरेवेति **चेन्न**। कुतः? तथा **दृष्ट्युपदेशात्** तथा अग्न्यादिनामलिङ्गकर्मवत्त्वेन दृष्ट्युपदेशाद् उपासनोपदेशादित्यर्थः । तथाच अग्न्यादिश्रुतिलिङ्गानां विष्णौ सवकाशत्वान्न तद्विरोध इति भावः । किञ्चात्रोक्तात्मत्वब्रह्मत्वादीनां अग्न्यादाव**सम्भवाच्च** वैश्वानरो विष्णुरेव । **अपिच** यतः छन्दोगाः एनं वैश्वानरं **पुरुषविधं** पुरुषसूक्तप्रतिपाद्यनारायणसमानगुणकमे**वाधीयते**ऽभिदधति । अतोऽपि विष्णुरेवेत्यर्थः । चशब्देन पुरुषसूक्तस्य विष्णुपरत्वं बहुप्रमाणसिद्धमिति सूचितम् ॥ ३ ॥

## २७. ॐ अत एव न देवता भूतं च ॐ

**देवता** अग्न्यादिरूपा । **भूतं** तदभिमन्यमानतेजोभूतं च वैश्वानरशब्दवाच्यं **न** । कुतः? अत एव निरवकाशात्मशब्दादिहेतोरेवेत्यर्थः ॥ ४ ॥

## २८. ॐ साक्षादप्यविरोधं जैमिनिः ॐ

---

१. 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्' (भ.गीता.१५–१४)

साक्षात् मुख्यवृत्त्या । अपि ब्रह्मणोऽग्न्यादिशब्दवाच्यत्वेऽपि अविरोधं अज्ञानादिनिमित्तान्तरेण अग्न्यादौ तत्तच्छब्दविरोधाभावं जैमिनिराचार्यो वक्तीत्यर्थः ॥ ५ ॥

## २९. ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ

**अभिव्यक्तेः** अग्न्यादिषु ब्रह्मोपास्तौ कृतायां तेषु ब्रह्मणो**ऽभिव्यक्तेः** । तन्निमित्तोऽग्न्यादिसूक्तनियम इति **आश्मरथ्या**चार्यो मन्यत इत्यर्थः ॥ ६ ॥

## ३०. ॐ अनुस्मृतेर्बादरिः ॐ

**अनुस्मृतेः** तत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेव ब्रह्मणो**ऽनुस्मृतेः** अनुसन्धानाद्धेतोरग्न्यादिसूक्तव्यवस्थेति **बादरि**र्वक्तीत्यर्थः ॥ ७ ॥

## ३१. ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ

**हि** यस्मात् । 'तं यथा'[1] इति हि प्रसिद्धा श्रुतिः **तथा दर्शयति** यथा जैमिनिमतं तथा प्रतिपादयति । तस्मा**ज्जैमिनिः** स्वोक्त्यनुकूलश्रुत्यनुसारेण । **सम्पत्तेः** अग्न्यादिसूक्तोपासकानामग्न्यादिप्राप्तिहेतोस्तद्विवक्षया सूक्तादिनियम इत्याहेत्यर्थः ॥ ८ ॥

## ३२. ॐ आमनन्ति चैनमस्मिन् ॐ

**चः** शङ्कानिवर्तकः । यस्मात् **एनं** विष्णुम् । अग्न्यादा**वामनन्ति** तत्स्थतया 'योऽग्नौ तिष्ठन्'[2] इत्याद्याः श्रुतयः प्रतिपादयन्ति । तस्मात् कथमग्न्यादिषु विष्णूपास्त्या अग्न्यादिप्राप्तिर्भवतीति शङ्का निवृत्ता । कुतः? अग्न्यादिपदेन तत्स्थभगवत्प्राप्तेरेवाभिप्रेतत्वादित्यर्थः ॥ ९ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥**

---

१. '**तं यथा** यथोपासते तदेव भवति'

२. (बृ.५-७-५)

# प्रथमाध्यायस्य तृतीयः पादः

॥ द्युभ्वाधिकरणम् ॥ १ ॥

## १. ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ

**द्युभ्वाद्यायतनं** 'यस्मिन्'[१] इति वाक्योक्तस्वर्गभूम्यादिसर्वाश्रयो विष्णुरेव न त्वन्यः । कुतः? **स्वशब्दात्** स्वेतिशब्दः स्वशब्दः स्वशब्दगृहीतब्रह्म-वाचकात्मशब्दादित्यर्थः ॥ १ ॥

## २. ॐ मुक्तोपसृप्यव्यपदेशात् ॐ

द्युभ्वाद्यायतनं न विष्णोरन्यः किन्तु विष्णुरेव । कुतः? **मुक्तोपसृप्यव्य-देशात्** । भावप्रधानोऽयम् । द्युभ्वाद्यायतनस्य वस्तुनो '**अमृतस्यैष सेतुः**' इति मुक्तप्राप्यत्ववचनात् तस्य चान्यत्रायोगादित्यर्थः ॥ २ ॥

## ३. ॐ नानुमानमतच्छब्दात् ॐ

**अनुमानं** आनुमानमिति वा । अनुमानसिद्धप्रामाण्ययुतपाशुपताद्यागमैः सर्वाश्रयतया कल्पितं रुद्रप्रधानादिकं द्युभ्वाद्ययतनं **न** । कुतः? **अतच्छब्दात्** भस्मधरोग्रत्वादितच्छ्रुतिलिङ्गाद्यभावादित्यर्थः ॥ ३ ॥

## ४. ॐ प्राणभृच्च ॐ

जीवोऽप्यत एव न द्युभ्वाद्यायतनमित्यर्थः ॥ ४ ॥

## ५. ॐ भेदव्यपदेशात् ॐ

---

१. '**यस्मिन् द्यौः** पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानम्'

(मुं.२–२–५)

'अन्यमीशम्'[१] इति जीवेशयोर्भेदोक्तेः न तयोरैक्यमित्यर्थः ॥ ५ ॥

## ६. ॐ प्रकरणात् ॐ

'अनश्नन्नन्यो'[२] इत्यादेर्विष्णु**प्रकरणत्वात्** । अत्र जीवस्य विष्णुभेद एवोच्यते । नत्वन्यस्माद् भेद इत्यर्थः ॥ ६ ॥

## ७. ॐ स्थित्यदनाभ्याञ्च ॐ

ईशजीवयोः 'द्वा सुपर्णा–'[२] इत्यादिवाक्योक्तं कर्मफलानुपजीवन**स्थिति-तदुपजीवन**रूपहेतुभ्यां न च तयोरैक्यं वाच्यमित्यर्थः ॥ ७ ॥

॥ भूमाधिकरणम् ॥ २ ॥

## ८. ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ

**भूमा** 'यो वै भूमा'[३] इति श्रुतौ भूमशब्दोक्तपूर्णो विष्णुरेव । कुतः? **सम्प्रसादात्** भूम्नस्तत्सुखमित्यनेन सम्प्रसादशब्दितपूर्णसुखरूपत्वाभिधानात् । किञ्च **अध्युपदेशात्** नामादेरपि तदुपरि नामादिदेवतोत्तमत्वेन भूम्नोऽभिधानाच्चेत्यर्थः ॥ १ ॥

## ९. ॐ धर्मोपपत्तेश्च ॐ

'स एवाधस्तात्'[४] इत्यादिना भूम्नि सर्वगतत्वादि**धर्म**श्रवणात् । तस्य च विष्णोरे**वोपपत्तेः** विष्णुरेव भूमेत्यर्थः ॥ २ ॥

॥ अक्षराधिकरणम् ॥ ३ ॥

## १०. ॐ अक्षरमम्बरान्तधृतेः ॐ

---

१. 'जुष्टं यदा पश्यत्य**न्यमीशम**स्य महिमानम्' (मु.३.१.२)

२. '**द्वा सुपर्णा** सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य**नश्नन्नन्यो** अभिचाकशीति' (मुं.३–१–१)

३. '**यो वै भूमा** तत्सुखम्' (छां.७–२३)

४. '**स एवाधस्तात्स** उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वम्' (छां.७.२५.१)

**अक्षरं** 'तद्वा एतत्' इत्यक्षरशब्दवाच्यं ब्रह्मैव न चित्प्रकृतिः । कुतः? **अम्बरान्तधृतेः** अस्मिन्नक्षरे 'एतस्मिन् खल्वक्षरे'[1] इत्याकाशान्तपदार्थधारकत्वश्रवणादित्यर्थः ।। १ ।।

## ११. ॐ सा च प्रशासनात् ॐ

चो यतः । **सा** अम्बरान्तधृतिः । **प्रशासनात्** विष्णोराज्ञामात्रादेव भवतीति 'एतस्य वा'[2] इति श्रुतावुक्ता । अतोऽपि ब्रह्मैवाक्षरशब्दवाच्यम् । न चेतनप्रकृतिरित्यर्थः ।। २ ।।

## १२. ॐ अन्यभावव्यावृत्तेश्च ॐ

**अन्यभावानां** विष्ण्वन्यवस्तुस्वभावानां स्थूलत्वादीनां 'अस्थूलमनणु'[3] इति श्रुतावक्षरे **व्यावृत्ते**रभावस्य कथनाच्च ब्रह्मैवाक्षरमित्यर्थः ।। ३ ।।

।। सदधिकरणम् ।। ४ ।।

## १३. ॐ ईक्षतिकर्मव्यपदेशात् सः ॐ

'सदेव' इत्यादि'[4] प्रकरणस्थितसदादिशब्दवाच्यः विष्णुरेव न प्रधानम् । कुतः? **ईक्षतिकर्मव्यपदेशात्** 'तदैक्षत'[5] इति चेतननिष्ठैक्षतेतिशब्दोपलक्षितदर्शनाख्यक्रियाभिधानादित्यर्थः ।। १ ।।

---

१. '**एतस्मिन् खल्वक्षरे** गार्ग्याकाश ओतश्च प्रोतश्च' (बृ.५–८–११)

२. '**एतस्य वा अक्षरस्य** प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.५–८–९)

३. '**अस्थूलमनण्व**ह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन' (बृ.५–८–८)

४. '**सदेव** सोम्येदमग्र आसीत्' (छां.६–२–१)

५. (छां.६–२–३)

॥ दहराधिकरणम् ॥ ५ ॥

## १४. ॐ दहर उत्तरेभ्यः ॐ

**दहरे** 'दहरं पुण्डरीकं वेश्म'[१] इति वाक्योक्तहृत्पद्मस्थाल्पाकाशे स्थितो विष्णुरेव न तु जीवादिः । कुतः? **उत्तरेभ्यः** 'य आत्माऽपहतपाप्मा'[२] इत्याद्युत्तरवाक्योक्तनिर्गतपाप्मत्वादिधर्मेभ्य इत्यर्थः ॥ १ ॥

## १५. ॐ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॐ

**गतिशब्दाभ्यां** 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकम्'[३] इति वाक्ये श्रुताभ्यां सुप्तप्राप्यत्वब्रह्मशब्दाभ्यां हेतुभ्यां दहरपद्मस्थं ब्रह्मैव । किञ्च यतः 'अरश्च'[४] इति श्रुतौ **तथा** सुप्तप्राप्यत्ववत् । **हि** विष्णुनिष्ठत्वेन प्रसिद्धं लिङ्गं अरण्याख्य-सुधासमुद्राश्रयलोकवत्त्वरूपज्ञापकम् । हृत्पद्मस्थे दृष्टमुक्तम् । अतोऽपि दहरपद्मस्थो विष्णुरेवेत्यर्थः ॥ २ ॥

## १६. ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ

**धृतेः** 'स एष सेतुर्विधृतिः'[५] इति हृत्पद्मस्थस्य सर्वाधारत्वश्रवणाच्च विष्णुरेव हृत्पद्मस्थः । किञ्च छान्दोग्ये हृत्पद्मस्थनिष्ठतयोक्तस्य **महिम्नः** सर्वेश्वरत्वादे**रस्मिन्** 'एष सर्वेश्वरः' इति वाजसनेयकवाक्ये । उपलब्धेः । श्रवणात् । तत्समाख्यानादपि विष्णुरेव हृत्पद्मस्थः । ननु समाख्यानादपि कुतो विष्णुरेवेत्यत उक्तम् । अस्येत्यादि । **अस्य** विष्णुमहिम्नः । अस्मिन् वाजसनेयकवाक्ये श्रवणादेवेत्यर्थः ॥ ३ ॥

---

१. 'अथ यदिदमस्मिन् ब्रह्मपुरे **दहरं पुण्डरीकं** वेश्म दहरोऽस्मिन्नन्तर आकाशः....किं तदत्र विद्यते' (छां.८.१.२)

२. '**य आत्माऽपहतपाप्मा** विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छां.८–३)

३. 'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छां. ८–३–१)

४. '**अरश्च ह वै** ण्यश्चार्णवौ ब्रह्मलोके' (छां. ८–५–३) ५. (छां. ८–४)

## १७. ॐ प्रसिद्धेश्च ॐ

'दहरं विपाप्मम्'[१] इति श्रुतौ विष्णोः हृत्पद्मस्थत्व**प्रसिद्धेश्च** स एव हृत्पद्मस्थ इत्यर्थः ॥ ४ ॥

## १८. ॐ इतरपरामर्शात् स इति चेन्नासम्भवात् ॐ

**इतरपरामर्शात्** 'स्वेन रूपेणाभिनिष्पद्यते'[२] इत्युक्तस्य जीवस्य हृत्पद्मस्थात्मतया 'एष आत्मा'[३] इत्येतच्छब्देन **परामर्शात्** ग्रहणात् । जीव एव हृत्पद्मस्थ **इति चेन्न** । कुतः? **असम्भवात्** हृत्पद्मस्थनिष्ठतया श्रुतानामपहतपाप्मत्वादिगुणानां जीवे स्वातन्त्र्येणासम्भवादित्यर्थः ॥ ५ ॥

## १९. ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ

तुशब्द एवार्थे । नेति शेषः । तथाच **उत्तरात्** 'स तत्र पर्येति'[४] इत्युत्तर-वाक्यात् । जीवस्य सत्यकामत्वादिप्रतीतेः । तत एव विशोकत्वादेः सम्भ-वात् । स एव हृत्पद्मस्थ इति **चेन्न** । कुतः? यतस्तद्वाक्ये 'स्वेन' इत्युत्तर-वाक्यबलात् **आविर्भूतस्वरूपो** मुक्त एव प्रतिपाद्यः । न जीवमात्रम् । मुक्तश्च न स्वतोऽपहतपाप्मत्वादिगुणकः । अतो न तस्यापि हृत्पद्मस्थत्वमित्यर्थः ॥ ६ ॥

## २०. ॐ अन्यार्थश्च परामर्शः ॐ

**चः** एवार्थे । **परामर्शः** 'एष आत्मा' इति वाक्यगतैतच्छब्दः **अन्यार्थः** । 'परञ्ज्योतिः' इत्युक्तपरमात्मार्थ एव न जीवार्थ इत्यर्थः ॥ ७ ॥

---

१. '**दहरं विपाप्मं** परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्' (महाना.१०–७)

२. 'परं ज्योतिरुपसम्पद्य **स्वेन रूपेणाभिनिष्पद्यते**' (छां. ८–१२–३)

३. '**एष आत्मे**ति होवाच' (छां. ४–१५–१)

४. '**स तत्र पर्येति** जक्षन् क्रीडन् रममाणः' (छां. ८–१२–३)

## २१. ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ

**अल्पश्रुतेः** 'दहरः'[१] इत्यल्पस्थानस्थितत्वोक्तेः । जीव एव हृत्पद्मस्थ **इति चेत्** । नेति शेषः । कुतः? यतस्**तदुक्तं** तत्तु अल्पस्थानस्थितत्वं उक्तं निचाय्यत्वादेवमित्यत्र व्याप्तस्यापि विष्णोः उपासनार्थमुच्यत इत्युक्तं 'आत्माऽन्तर्हृदये' इति श्रुत्युक्तं च अत इत्यर्थः ।। ८ ।।

।। अनुकृत्यधिकरणम् ।। ६ ।।

## २२. ॐ अनुकृतेस्तस्य च ॐ

**चः** समुच्चये । **तस्येति** श्रुतिप्रतीकग्रहणम् । **अनुकृतिरनु**क्रिया । तथाच 'कथं नु तद्विजानीयाम्'[२] इति ज्ञानार्थं प्रार्थितत्वरूपानुकूल्येन गृह्यमाणं ब्रह्मैव । कुतः? **अनुकृतेः** 'तमेव भान्तमनुभाति सर्वम्'[३] इति वाक्यशेषे सूर्यादीनां भगवत्क्रियानुसारिप्रकाशाख्यक्रियाकर्तृत्वश्रवणात् । 'तस्य भासा सर्वमिदं विभाति'[४] इति जगतः परमात्मप्रभाप्रकाश्यत्वश्रुतेश्चेत्यर्थः ।। १ ।।

## २३. ॐ अपि स्मर्यते ॐ

न केवलं हेतुकृतानुकृत्यादेर्विष्णुधर्मत्वं श्रूयते किन्तु कृष्णादिभिः 'यदादित्य-गतं तेजो'[५] इत्यादि स्मृत्यादिषूच्यत इत्यर्थः ।। २ ।।

।। वामनाधिकरणम् ।। ७ ।।

## २४. ॐ शब्दादेव प्रमितः ॐ

---

१. 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तः' (छां.८-१-१)

२. (कठ.२-२-१४) ३. (कठ.२-२-१५)

४. (कठ.२-२-१५)

५. 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (भ.गीता.१५.१२)

विष्णुरेव 'ईशानो भूतभव्यस्य'[1] इति ईशानशब्दवाच्यत्वेन प्रमितः। तत्वतो निश्चितः। न तु वायुः। कुतः? **शब्दादेव** 'मध्ये वामनम्'[2] इति निरवकाश-वामनश्रुतेरेवेत्यर्थः ॥ १ ॥

## २५. ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ

तुशब्द एवार्थे। अपिशब्दार्थे च। तथाच सर्वगतस्यापि विष्णोः अङ्गुष्ठ-मात्रत्वोक्तिः **हृद्यपेक्षया** अङ्गुष्ठपरिमितहृद्याकाशापेक्षयैव। न तावता विष्णोः परिच्छिन्नत्वं ज्ञेयमित्यर्थः। ननु पश्वादीनामङ्गुष्ठाभावात् कथं तन्मात्रत्ववचनं सर्वाधिकारिकमित्यत उक्तम्। **मनुष्याधिकारत्वादिति**। तथा चैतद् विद्योपासनस्य मनुष्याधिकारिकत्वात्। तान् प्रत्येतद्विद्याप्रवृत्तिसम्भवात्। पश्वादीनामङ्गुष्ठाभावेऽपि न दोष इति भावः ॥

॥ देवताधिकरणम् ॥ ८ ॥

## २६. ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ

**तदुपर्यपि** देवत्वयोग्यमनुष्याणां न केवलं मनुष्यत्वदशायां किन्तु देवादित्व-प्राप्त्यनन्तरमपि वेदविद्याधिकारोऽस्ति। कुतः? **सम्भवात्** तेषामप्यधिकार-प्रयोजकविशिष्टबुध्यादेर्योगादिति **बादरायणो** भगवान् वक्तीत्यर्थः ॥ १ ॥

## २७. ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ

देवादीनां सादित्वे **कर्मणि** पूर्वकल्पे प्रवृत्तयज्ञादिकर्मणि विषये। **विरोधः** उद्देश्याभावनिमित्तवैयर्थ्याख्यविरोधः। स्यादिति **चेन्न**। कुतः **अनेकप्रतिपत्तेः** अनेकेषां योग्यमनुष्याणां देवतापदप्राप्ते**र्दर्शनात्**। 'यत्र पूर्वे'[3] इति श्रुता-वुक्तत्वादित्यर्थः ॥ २ ॥

---

१. (कठ.२–१–१२)

२. 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। **मध्ये वामनमासीनं** विश्वे देवा उपासते' (कठ.२.२.३)

३. 'ते ह नाकं महिमानस्सचन्ते। **यत्र पूर्वे** साध्यास्सन्ति देवाः' (तै.आ.३–१२)

## २८. ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॐ

विरोध इति वर्तते । देवानामाद्यन्तवत्त्वे **शब्दे** वेदे अप्रामाण्याख्यविरोधः स्यान्नित्यत्वेन श्रुतिसिद्धवेदवाचाम् । कदाचिद् वाच्यहीनत्वादिति भाव **इति चेन्न** । अतः 'धाता यथा' इति वेदवाक्यात् । तथा **प्रत्यक्षानुमानाभ्याम्** । महतां प्रत्यक्षात् । देवानां प्रवाहतः उत्पत्तिसाधकलिङ्गाच्च । प्रभवात् प्रतिकल्पम् । नियमेन प्रभवशब्दितोत्पत्त्यवगमाच्च उक्तं युक्तमिति भावः ॥३॥

## २९. ॐ अत एव च नित्यत्वम् ॐ

**अत एव** पूर्वपक्ष्युक्तवेदनित्यत्वादेव तदन्यथाऽनुपपत्त्याऽपि तद्वाच्यदेवप्रवाहस्य नित्यत्वं सिध्यतीत्यर्थः ॥ ४ ॥

## ३०. ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॐ

**अवृत्तावपि** पूर्वकल्पे मुक्तानां देवानां पुनः स्वपदेषु असत्त्वेऽपि । अविरोधः तत्प्रतिपादकैकविधवेदाप्रामाण्याख्यविरोधो नास्ति । कुतः? **समाननामरूपत्वात्** एतत्कल्पोत्पन्नानामपि देवानां प्राचीनतुल्यनामरूपत्वात् । तथा च प्रतिपाद्यस्याप्येकविधत्वात् न तद्बोधकवेदाप्रामाण्यमिति भावः । एकविधत्वमेव कुत इत्यत उक्तम् । **दर्शनात् स्मृतेश्चेति** । 'यथा पूर्वम्'[१] इति श्रुतेः । अनादिनिधनेति स्मृतेश्चेत्यर्थः ॥ ५ ॥

## ३१. ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ

**मध्वादिषु** 'असौ वा आदित्यो देवमधु'[२] इत्याद्युक्तमध्वादिविद्यासु । **अनधिकारं** देवानामधिकाराभावम् । **जैमिनि**राचार्यो मन्यते । कुतः? **असम्भवात्** तेषामर्थित्वतत्पदयोग्यत्वाद्ययोगादित्यर्थः ॥ ६ ॥

---

१. 'सूर्याचन्द्रमसौ धाता **यथापूर्व**मकल्पयत्' (महाना.५–७)
२. (छां.३–१–१)

## ३२. ॐ ज्योतिषि भावाच्च ॐ

**ज्योतिषि** देवानां ज्ञाने भावात् सर्ववस्तूनां विषयतयाऽन्तर्भूतत्वात्। सिद्धज्ञानानां देवानां न ज्ञानार्थिता युज्यत इति न मोक्षविद्यास्वप्यधिकार इत्यर्थः ॥ ७ ॥

## ३३. ॐ भावं तु बादरायणोऽस्ति हि ॐ

**हि** यस्मात्। देवानामप्यस्ति विद्यासाध्यापूर्वप्रकाशविशेषो मोक्षफले अतिशयश्चास्ति। तस्माद्भ**ावं** देवानामधिकारसद्भावं **बादरायणः** मन्यत इत्यर्थः। जैमिनिमतं तु देवानां प्राप्तज्ञानफलार्थमनधिकाराभिप्रायमित्यवधेयम् ॥ ८ ॥

॥ अपशूद्राधिकरणम् ॥ ९ ॥

## ३४. ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॐ

अस्य पौत्रायणाख्यस्य राज्ञः **तदनादरश्रवणात्** हंसकृतस्य 'कम्वर एनम्'[1] इत्यनादरस्य श्रवणान्निमित्तात्। शुक् शोकः। तथाऽपि कुतः शोकः? इत्यत उक्तम्। सूच्यते हीति। हि यस्मात्। 'स ह सञ्जिहान एव'[2] इत्युत्तरवाक्येन सूच्यते तथा ज्ञायते। तस्माच्छोकः अस्मादेव निमित्तात्। राजा रैक्केण ऋषिणा शूद्रेति सम्बोधितः। न तु वर्णावरत्वाभिप्रायेणेत्यर्थः। तथाच नैतज्ज्ञापकबलेन शूद्रस्य वेदविद्याधिकारो मन्तव्य इति भावः ॥ १ ॥

## ३५. ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ

**चः** लिङ्गान्तरसमुच्चये। **उत्तरत्र** हि 'अश्वतरीरथः'[3] इत्युत्तरवाक्ये। श्रुतेनेति शेषः। **चैत्ररथेन** चित्रशब्दादश्वतरीयुक्तरथसम्बन्धित्वरूपेण **लिङ्गात्**। लिङ्गेन च ज्ञापकेन चास्य **क्षत्रियत्वावगतेश्च**। क्षत्रियत्वज्ञानात्। न पौत्रायणः शूद्र इत्यर्थः ॥ २ ॥

---

१. '**कम्वर एनमेतत्सन्तम्**' (छां.४–१–३)

२. '**स ह सञ्जिहान एव क्षत्तारमुवाच**' (छां.४–१–५)

३. (छां. ४–२–२)

## २८. ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॐ

विरोध इति वर्तते । देवानामाद्यन्तवत्त्वे **शब्दे** वेदे अप्रामाण्याख्यविरोधः स्यान्नित्यत्वेन श्रुतिसिद्धवेदवाचाम् । कदाचिद् वाच्यहीनत्वादिति भाव **इति चेन्न** । अतः 'धाता यथा' इति वेदवाक्यात् । तथा **प्रत्यक्षानुमानाभ्याम्** । महतां प्रत्यक्षात् । देवानां प्रवाहतः उत्पत्तिसाधकलिङ्गाच्च । प्रभवात् प्रतिकल्पम् । नियमेन प्रभवशब्दितोत्पत्त्यवगमाच्च उक्तं युक्तमिति भावः ॥३॥

## २९. ॐ अत एव च नित्यत्वम् ॐ

**अत एव** पूर्वपक्ष्युक्तवेदनित्यत्वादेव तदन्यथाऽनुपपत्त्याऽपि तद्वाच्यदेवप्रवाहस्य नित्यत्वं सिध्यतीत्यर्थः ॥ ४ ॥

## ३०. ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॐ

**अवृत्तावपि** पूर्वकल्पे मुक्तानां देवानां पुनः स्वपदेषु असत्त्वेऽपि । अविरोधः तत्प्रतिपादकैकविधवेदाप्रामाण्याख्यविरोधो नास्ति । कुतः? **समाननामरूपत्वात्** एतत्कल्पोत्पन्नानामपि देवानां प्राचीनतुल्यनामरूपत्वात् । तथा च प्रतिपाद्यस्याप्येकविधत्वात् न तद्बोधकवेदाप्रामाण्यमिति भावः । एकविधत्वमेव कुत इत्यत उक्तम् । **दर्शनात् स्मृतेश्चेति** । 'यथा पूर्वम्'[1] इति श्रुतेः । अनादिनिधनेति स्मृतेश्चेत्यर्थः ॥ ५ ॥

## ३१. ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ

**मध्वादिषु** 'असौ वा आदित्यो देवमधु'[2] इत्याद्युक्तमध्वादिविद्यासु । **अनधिकारं** देवानामधिकाराभावम् । **जैमिनिराचार्यो** मन्यते । कुतः? **असम्भवात्** तेषामर्थित्वतत्पदयोग्यत्वाद्ययोगादित्यर्थः ॥ ६ ॥

---

१. 'सूर्याचन्द्रमसौ धाता **यथापूर्वमकल्पयत्**' (महाना.५–७)

२. (छां.३–१–१)

## ३२. ॐ ज्योतिषि भावाच्च ॐ

**ज्योतिषि** देवानां ज्ञाने भावात् सर्ववस्तूनां विषयतयाऽन्तर्भूतत्वात्। सिद्ध-ज्ञानानां देवानां न ज्ञानार्थिता युज्यत इति न मोक्षविद्यास्वप्यधिकार इत्यर्थः ॥ ७ ॥

## ३३. ॐ भावं तु बादरायणोऽस्ति हि ॐ

**हि** यस्मात्। देवानामप्यस्ति विद्यासाध्यापूर्वप्रकाशविशेषो मोक्षफले अतिशय-श्चास्ति। तस्माद्भावं देवानामधिकारसद्भावं **बादरायणः** मन्यत इत्यर्थः। जैमिनिमतं तु देवानां प्राप्तज्ञानफलार्थमनधिकाराभिप्रायमित्यवधेयम् ॥ ८ ॥

॥ अपशूद्राधिकरणम् ॥ ९ ॥

## ३४. ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॐ

अस्य पौत्रायणाख्यस्य राज्ञः **तदनादरश्रवणात्** हंसकृतस्य 'कम्वर एनम्'[1] इत्यनादरस्य श्रवणान्निमित्तात्। शुक् शोकः। तथाऽपि कुतः शोकः? इत्यत उक्तम्। सूच्यते हीति। हि यस्मात्। 'स ह सञ्जिहान एव'[2] इत्युत्तरवाक्येन सूच्यते तथा ज्ञायते। तस्माच्छोकः अस्मादेव निमित्तात्। राजा रैक्वेण ऋषिणा शूद्रेति सम्बोधितः। न तु वर्णावरत्वाभिप्रायेणेत्यर्थः। तथाच नैतज्ज्ञापकबलेन शूद्रस्य वेदविद्याधिकारो मन्तव्य इति भावः ॥ १ ॥

## ३५. ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ

**चः** लिङ्गान्तरसमुच्चये। **उत्तरत्र** हि 'अश्वतरीरथः'[3] इत्युत्तरवाक्ये। श्रुतेनेति शेषः। **चैत्ररथेन** चित्रशब्दादश्वतरीयुक्तरथसम्बन्धित्वरूपेण **लिङ्गात्**। लिङ्गेन च ज्ञापकेन चास्य **क्षत्रियत्वावगतेश्च**। क्षत्रियत्वज्ञानात्। न पौत्रायणः शूद्र इत्यर्थः ॥ २ ॥

१. 'कम्वर एनमेतत्सन्तम्' (छां.४–१–३)

२. 'स ह सञ्जिहान एव क्षत्तारमुवाच' (छां.४–१–५)

३. (छां. ४–२–२)

## ३६. ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ

साध्यसमुच्चये चशब्दः । **संस्कारपरामर्शात्** 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्येतच्छब्देन उपनयनाख्यसंस्कारयुक्तस्य वचनात् । **तदभावाभिलापात्** शूद्रस्य 'नाग्निर्न यज्ञः'[१] इति (पैङ्गिश्रुतौ) संस्काराभावाभिधानात् न तस्य वेदविद्याधिकार इत्यर्थः ॥ ३ ॥

## ३७. ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ

चोऽवधारणे । **तदभावनिर्धारणे** सत्यकामाख्यपुरुषस्य शूद्रत्वाभावनिश्चये सत्येव । प्रवृत्तेर्गौतमस्य तदुपनयने प्रवृत्तत्वात् । अस्माज्ज्ञापकान्न शूद्रस्य संस्कारो युज्यत इत्यर्थः ॥ ४ ॥

## ३८. ॐ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॐ

**श्रवणाध्ययनार्थप्रतिषेधात्** शूद्रस्य वेदश्रवणतदध्ययनतदर्थावधारणानां 'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूर्णम्'[२] इति प्रतिषिद्धत्वात् । स्मृतेः 'नाग्निर्न यज्ञः शूद्रस्य'[३] इति निषेधकस्मृतेश्च न तस्य वेदविद्याधिकार इत्यर्थः ॥ ५ ॥

॥ कम्पनाधिकरणम् ॥ १० ॥

## ३९. ॐ कम्पनात् ॐ

'महद्भयं वज्रम्'[४] इति वज्रशब्दवाच्यो विष्णुरेव नत्विन्द्रायुधम् । कुतः? **कम्पनात्** 'सर्वमेजति'[४] इति कम्पनशब्दितसर्वचेष्टकत्वलिङ्गश्रवणादित्यर्थः ॥ १ ॥

---

१. '**नाग्निर्न यज्ञ**र्न क्रिया न संस्कारो न व्रतानि शूद्रस्य'

२. '–अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणम्' (गौतमधर्म. १२–४–७)

३. '**नाग्निर्न यज्ञः शूद्रस्य** तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते ॥

४. 'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम् ।
**महद् भयं वज्र**मुद्यतं य एतद् विदुरमृतास्ते भवन्ति' (कठ.२.३.२)

॥ ज्योतिरधिकरणम् ॥ १ ॥

## ४०. ॐ ज्योतिर्दर्शनात् ॐ

'योऽयमन्तर्ज्योतिः'[१] इति **ज्योतिश्शब्दवाच्यो** विष्णुरेव न जीवः । कुतः? **दर्शनात्** 'विष्णुरेव ज्योतिः'[२] इति श्रुतेरित्यर्थः ॥ १ ॥

॥ आकाशाधिकरणम् ॥ १२ ॥

## ४१. ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ

'आकाशो ह वै नाम' इति श्रुत्युक्ता**काशो** विष्णुरेव । न त्वव्याकृताकाशः । कुतः? **अर्थान्तरत्वादिव्यपदेशात्** । 'ते यदन्तरा'[३] इति वाक्ये विष्णोर्नामरूपराहित्याख्यविलक्षणार्थत्वस्य आदिशब्दगृहीतब्रह्मत्वामृतत्वयोश्च उक्तत्वादित्यर्थः ॥ १ ॥

॥ सुषुप्त्यधिकरणम् ॥ १३ ॥

## ४२. ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ

'स यत्तत्र किञ्चित् पश्यति'[४] इति श्रुत्युक्तस्वप्नादिद्रष्टा परमात्मैव । न जीवः । कुतः 'असङ्गो ह्ययं पुरुषः' इत्युक्तासङ्गत्वलिङ्गादिति हेतुर्बहिरेवाध्याहार्यः । नन्वीश्वराभेदेन जीवेऽप्यसङ्गत्वोक्तिः सम्भवतीत्यत उक्तम् । सुषुप्तीत्यादि । तथा च **सुषुप्त्युत्क्रान्त्योः** 'प्राज्ञेनात्मना सम्परिष्वक्तः'[५] इति

---

१. 'योऽयं विज्ञानमयः प्राणेषु हृद्य**न्तर्ज्योतिः** पुरुषः' (बृ.६–३–७)

२. '**विष्णुरेव ज्योति**र्विष्णुरेवात्मा विष्णुरेव ब्रह्म विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्दः' (चतुर्वेदशिखा.)

३. '**ते यदन्तरा** ब्रह्म' (छां.८–१४–१)

४. '**स यत्तत्र किञ्चित्** पश्यत्यनन्वागतस्तेन भवत्य**सङ्गो ह्ययं पुरुषः**' (बृ.६–३–१५)

५. '**प्राज्ञेनात्मना सम्परिष्वक्तो** न बाह्यं किञ्चन वेद नान्तरम्' (बृ.६–३–२१)

'प्राज्ञेनात्मनाऽन्वारूढः'[१] इति च सुषुप्त्युत्क्रान्तिप्रकरणयोः । **भेदेन** जीवेश-योर्भिन्नत्वेनोक्तेः । न तयोरैक्यमित्यर्थः ॥ १ ॥

॥ ब्राह्मणाधिकरणम् ॥ १४ ॥

## ४३. ॐ पत्यादिशब्देभ्यः ॐ

'एष नित्यो महिमा ब्राह्मणस्य'[२] इति श्रुत्युक्तब्राह्मणो विष्णुरेव । न विरिञ्चः । कुतः? **पत्यादिशब्देभ्यः** सर्वस्याधिपतिरित्यादिसर्वाधिपत्यादि-वाचिश्रुतिभ्यः[३] इत्यर्थः ॥ १ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥**

**॥ ॐ ॥**

१. '**प्राज्ञेनात्मनाऽन्वारूढः** उत्सर्जद्याति' (बृ.६–३–३५) २. (बृ.६–४–२२)

३. '**सर्वस्याधिपतिः** सर्वस्येशानः स वा एष नेति नेति' (बृ. ६–४–२१), 'उतामृतत्वस्येशानः। यदन्नेनातिरोहति' (तै.आ.३.१२), 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' (ऋ.१.१६४.३६), 'स योऽतोऽश्रुतः' (ऐ.आ.३.२.४)

# प्रथमाध्यायस्य चतुर्थः पादः

॥ आनुमानिकाधिकरणम् ॥ १ ॥

## १. ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च ॐ

अपिरेवार्थे। चः स्मृतिसमुच्चये। तथाच यतः **आनुमानिकं** साङ्ख्यानुमानकल्पितं प्रधानाद्येव । **एकेषां** शाखिनां शाखासु स्थितैः 'अव्यक्तात् पुरुषः'[1] इत्यादिवाक्यगताव्यक्तादिशब्दैरुच्यते । अतो न विष्णोः सर्वशब्दवाच्यत्वं युज्यत **इति चेन्न** । यतः विष्णुरेवाव्यक्तादिशब्दवाच्यः । न प्रधानादिः । तत्कुतः? यतः 'अव्यक्तम्'[2] इति श्रुतिः 'अव्यक्तोऽक्षरः'[3] इति स्मृतिश्च । **दर्शयति** विष्णोरेवाव्यक्तादिशब्दवाच्यत्वं प्रतिपादयति। अत इत्यर्थः। कथं तर्ह्यन्यत्राव्यक्तादिशब्दव्यवहार इत्यत उक्तम्। शरीररूपकेत्यादि। कप्रत्ययः कुत्सने। तथा च **शरीररूपकविन्यस्तगृहीतेः** यथा शरीरं पुरुषतन्त्रम्, तथा परमात्मतन्त्रत्वेन निमित्तेन शरीरसमे कुत्सितत्वात् । वस्तुतः अशरीरे प्रधानादौ । विन्यस्तस्य स्थितस्य परमात्मन एवाव्यक्तादिशब्दैः गृहीतेः ग्रहणात् । तथाच परमात्मसम्बन्धादेवान्यत्र प्रकृत्यादावव्यक्तादि-शब्दवाच्यत्वव्यवहार इत्यर्थः ॥ १ ॥

---

१. (कठ.१–३–११)

२. '**अव्यक्तमचलं शान्तं** निष्कलं निष्क्रियं परम्।
योवेद हरिमात्मानं स भयादनुमुच्यते' (पिप्पलादशाखा.)

३. (भ.गी.८–२१)

## २. ॐ सूक्ष्मं तु तदर्हत्वात् ॐ

यतः **सूक्ष्मं** तु सूक्ष्ममेवाव्यक्तशब्दवाच्यम्। कुतः? **तदर्हत्वात्** तस्य सूक्ष्मस्य अव्यक्तशब्दप्रवृत्तिनिमित्तयोग्यत्वात्। तत्र च सूक्ष्मत्वं विष्णोरेव। अतस्तस्यैवाव्यक्तशब्दवाच्यत्वमित्यर्थः ॥ २ ॥

## ३. ॐ तदधीनत्वादर्थवत् ॐ

दर्शयति चेत्यत्रत्यश्चशब्दोऽनुवर्तते । परमात्मन्येव परावरदुःखिबद्धत्वादिवाचिशब्दजातम् । **अर्थवत्** प्रवृत्तिनिमित्तरूपार्थवत् । न व्यर्थम् । कुतः? **तदधीनत्वात्** तेषां प्रधानादिगतपरावरत्वादिधर्माणां भगवदधीनत्वात्। तथा चान्यगतप्रवृत्तिनिमित्तस्वामित्वेन निमित्तेनापि भगवति परावरादिशब्दप्रयोगो युक्त एवेत्यर्थः ॥ ३ ॥

## ४. ॐ ज्ञेयत्वावचनाच्च ॐ

'तमेवैकं जानथ'[१] इति विष्णोरेव मोक्षार्थं **ज्ञेयत्ववचनात्**। अन्येषां तदवचनात्। प्रत्युत विमुञ्चथेति हेयत्वावचनात्। अत्रत्याव्यक्तादिशब्दैर्विष्णुरेव वाच्य इत्यर्थः ॥ ४ ॥

## ५. ॐ वदतीति चेन्न प्राज्ञो हि ॐ

ननु अनाद्यनन्तमिति काठकवाक्यम् । **वदति** प्रधानं प्रतिपाद्यते । इति तस्यापि ज्ञेयत्वमस्तीति चेन्न। कुतः? **हि** यतः। **प्राज्ञः** प्राज्ञशब्दितः परमात्मैव तत्र प्रतिपाद्यते न प्रधानम्। अतो न तस्य ज्ञेयत्वं मन्तव्यमित्यर्थः ॥ ५ ॥

## ६. ॐ प्रकरणात् ॐ

वैष्णवरूपाणां त्रयाणां **प्रकरणबलाच्च** प्राज्ञ एवात्र प्रतिपाद्य इत्यर्थः ॥६॥

---

१. (मुं.२-२-५)

## ७. ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ

युक्तिसमुच्चये चो यत इत्यर्थे च । एवशब्दः प्रकारत्रैविध्यपरामर्शकः । तथाच यतः एवं **त्रयाणामेव** पितृसौमनस्यस्वर्ग्याग्निपरमात्मरूपाणां त्रयाणामेव । तद्विषयक एव प्रश्नः नचिकेतऋषिणा यमं प्रति कृतः । तेषामे**वोपन्यासः** प्रतिवचनं चात्र प्रकरणे दृश्यते । अतो नात्र प्रधानं प्रतिपाद्यमित्यर्थः ॥ ७ ॥

## ८. ॐ महद्वच्च ॐ

चः दार्ष्टान्तिकसमुच्चये । 'महान्तं विभुमात्मानम्'[१] इत्यादिवाक्यगतमहच्छब्दस्य यथा विष्णुपरत्वमेव न महत्तत्वपरत्वं तद्वदव्यक्तादिशब्दस्यापीत्यर्थः ॥८॥

## ९. ॐ चमसवदविशेषात् ॐ

**चमसवत्** यथा यज्ञपात्रे प्रसिद्धस्यापि चमसशब्दस्य 'इदं तच्छिरः'[२] इति श्रुतिबलेन शिरोवाचकता तद्वदव्यक्तादिशब्दस्य प्रधानादौ प्रसिद्धत्वेऽपि विष्णुवाचकत्वमेव । कुतः? 'नामानि' इति श्रुतेः । ननु तथापि कुतो विष्णुवाचकत्वम्? इत्यत उक्तम्– **अविशेषादिति** । 'नामानि सर्वाणि' इति श्रुतेः 'इदं' इति श्रुत्या विशेषाभावादित्यर्थः ॥ ९ ॥

॥ ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

## १०. ॐ ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ॐ

तुशब्द एवार्थे । **ज्योतिः** 'ज्योतिषा यजेत' इत्यादिवाक्योक्तज्योतिरादिशब्दवाच्यं ब्रह्मैव न ज्योतिष्टोमादि । कुतः? **हि** यस्माद**ेके** शाखिनः । **उपक्रमात्** 'एष इमम्' इत्युपक्रम्य **तथा** सर्वशब्दाभिधेयत्वेन हरिमेव 'ता वा एताः'[३] इत्यत्राधीयते पठन्ति तस्मादित्यर्थः ॥ १ ॥

१. (कठ.१–२–२२) २. 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.४–२–३)

३. '**ता वा एताः** सर्वा ऋचः सर्वे वेदास्सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' (ऐ.आ.२–२–२)

## ११. ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ

च एवार्थे। समुच्चये वा। तथा च **मध्वादिवत्** यथा मधुविद्यादिगतमध्वादि-शब्दानां विष्णुवाचित्वेऽप्य**विरोधः** न लौकिकक्षौद्रादिवाचकशब्दाभावेन तदभावाख्यविरोधः । तथा परमात्मनः सर्वशब्दवाच्यत्वेऽभ्युपगतेऽपि न कर्माद्यभावविरोधः। कुतः? शब्दानामन्यत्र योगरूढिवृत्ती अभ्युपगम्यैवेश्वरे महायोगवृत्त्यङ्गीकारादित्यध्याहारः । तदपि कुतः? **कल्पनोपदेशात्** 'प्राण ऋचः'इति सर्वशब्दवाच्यत्वस्य विष्णोः कल्पनाशब्दितोपासनार्थमुक्तत्वात्। तस्य च सर्वशब्दार्थमुख्यगुणवत्त्वरूपमहायोगवृत्तिं विनाऽयोगादित्यर्थः ॥२॥

॥ न सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

## १२. ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ

**सङ्ख्योपसङ्ग्रहात्** 'यस्मिन् पञ्च पञ्चजना'[१] इति बहुत्वसङ्ख्यावचनात्। अपि यस्मिन्नित्याधाराधेयभावनिर्देशादपि। विष्णोः पञ्चजनादिशब्दवाच्यत्वे विरोधो **नास्ति** । कुतः **नानाभावात्** भगवतः बहुरूपाणां सत्त्वात् । **अतिरेकाच्च** यस्मिन्नित्युक्ताधाररूपस्य पञ्चजना इत्युक्ताधेयरूपस्य सविशेषाभिन्नत्वा-च्चेत्यर्थः ॥ १ ॥

## १३. ॐ प्राणादयो वाक्यशेषात् ॐ

भगवद्रूपत्वेनोक्ताः पञ्चजनास्तु **प्राणादेः प्राणादयः** द्वितीयानिर्दिष्ट-घ्राणचक्षुःश्रोत्रान्नमनोभिधाः ज्ञेयाः । कुतः? **वाक्यशेषात्** ते च भगवद्रूप-विशेषा एव । कुतः? विष्णोरन्यत्रासम्भावितप्राणप्राणप्रदत्वादिप्रतिपादकं 'प्राणस्य प्राणम्'[२] इत्यादि वाक्यशेषादित्यर्थः ॥ २ ॥

---

१. '**यस्मिन् पञ्च पञ्चजना** आकाशश्च प्रतिष्ठितः' (बृ.६-४-११७)

२. '**प्राणस्य प्राणमुत** चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः' (छां.६-४-१८)

## १४. ॐ ज्योतिषैकेषामसत्यन्ने ॐ

एकेषां कण्वादीनां शाखायाम् । अन्ने अन्नाख्यभगवद्रूपे । असति अनुक्तेऽ-पि । ज्योतिषा तदाख्यभगवद्रूपेण पञ्चत्वसङ्ख्यापूर्तिर्ज्ञातव्येत्यर्थः ॥ ३ ॥

॥ आकाशाधिकरणम् ॥ ४ ॥

## १५. ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ

'आत्मनः आकाशः सम्भूतः आकाशाद् वायुः'[1] इत्यादौ कार्यत्वे सति कारणत्वरूपावान्तरकारणवाचकाकाशादिशब्दैराकाशादिषु स्थितो विष्णुरेव । कारणत्वेन चशब्दात् कार्यत्वेन चोच्यते न भूतम् । कुतः **यथाव्यपदिष्टत्वोक्तेः** 'स योऽतोऽश्रुतः'[2] इत्यादौ विष्णुर्यथा यादृशेनाविदितत्वादिरूपेण व्यपदिष्टः उक्तः । तद्रूपयुक्तस्यैवाकाशादिषु 'यमाकाशो न वेद'[3] इत्यादि-वाक्येनोक्तत्वादित्यर्थः ॥ १ ॥

॥ समाकर्षाधिकरणम् ॥ ५ ॥

## १६. ॐ समाकर्षात् ॐ

स्वतो मुख्यवृत्त्या परमात्मवाचिनः शब्दान् । ततः समाकृष्यान्यत्र वाचकत्व-शक्त्यङ्गीकारात् । नान्यत्र व्यवहारलोपप्रसङ्ग इत्यर्थः ॥ १ ॥

## १७. ॐ जगद्वाचित्वात् ॐ

लोकव्यवहाराच्छब्दानां **जगद्वाचित्वज्ञानात्** तेषां तत्र प्रसिद्धिर्युक्तेत्यर्थः ॥ २ ॥

## १८. ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ

---

१. (तै.२–१–२) २. (ऐ.आ.३–२–४)

३. (बृ.५–७–१२)

'अस्य यदैकां शाखां जीवो जहाति'[१] इति 'वायुना हि लोका नेनीयन्ते' इति वाक्ये च। **जीवमुख्यप्राणलिङ्गात्** जीवमुख्यप्राणलिङ्गयोः श्रवणात्। तयोरपि तत्तच्छब्दमुख्यवाच्यता स्यादिति चेन्न। कुतः? यस्मात् **तद्वाक्य**जातं तत्तदन्तर्यामिपरतया व्याकृतं तस्मादित्यर्थः ॥ ३ ॥

## १९. ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ

तुशब्द एवार्थे। एतेन विष्णोरन्यत्र शब्दान् समाकृष्य कर्मादिप्रतिपादनमपि युक्तमेव। कुतः? यस्मात् **अन्यार्थं** परमात्मज्ञानार्थमेव। तत्कुत इति चेत्। **प्रश्नव्याख्यानाभ्यां** कस्मिन्निति शौनकप्रश्नात् 'द्वे विद्ये'[२] इति आङ्गिरसो वचनात् तथा कस्मिन्विति शौनकप्रश्नात् तथा कथं न्विति श्वेतकेतुप्रश्नात् 'यथा सौम्य–'[३] इत्युद्दालकवचनाच्च इति **जैमिनि**राचार्यो मन्यते। किञ्च **एके** शाखिनः स्पष्टं 'यस्तं न वेद'[४] इत्यन्यज्ञानस्य परमात्मज्ञानार्थतां पठन्ति तस्मादपीत्यर्थः ॥ ४ ॥

## २० ॐ वाक्यान्वयात् ॐ

ब्रह्मणि वाक्यसमन्वयमपेक्ष्य वेदेन कर्मादिकमपि प्रतिपादनीयमित्यर्थः ॥५॥

## २१. ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ

वेदेन कर्मादिप्रतिपादनम्। यतः **प्रतिज्ञासिद्धेः**। लिङ्गं ज्ञानमेव मोक्षहेतुः नान्यदित्येवं रूपायाः 'नान्यः पन्थाः'[५] इति प्रतिज्ञातार्थसिद्धेः साधकम्। अतस्तदुपयोगित्वेन तत्प्रतिपादनं युक्तमित्या**श्मरथ्याचार्यो** मन्यत इत्यर्थः ॥ ६ ॥

---

१. '**अस्य यदैकां शाखां जीवो जहाति** अथ सा शुष्यति' (छां.६–११–२)

२. 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति। तस्मै स होवाच **द्वे विद्ये वेदितव्ये**' (मुं.१–१२–४)

३. 'कथं नु भगवस्स आदेशो भवतीति। **यथा सोम्यै**केन मृत्पिण्डेन' (छां.६.१.३.४)

४. '**यस्तं न वेद** किमृचा करिष्यति' (ऋ.१–१६४–३९)

५. '**नान्यः पन्थाः** अयनाय विद्यते' (तै.आ.३–१–१२–७)

## २२. ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ

**उत्क्रमिष्यतः** ज्ञानान्मोक्षमिच्छतोऽधिकारिणः । एवं ज्ञानसाधनतया । **भावात्** कर्मादेरप्यनुष्ठेयत्वान्मोक्षार्थज्ञानसाधनत्वेन वेदेन कर्मादिप्रतिपादनं युक्तमेवेति **औडुलोमिराचार्यो** मन्यत इत्यर्थः ।। ७ ।।

## २३. ॐ अवस्थितेरिति काशकृत्स्नः ॐ

सर्वाधारे भगवति कर्मादीनां **अवस्थितेः** अवस्थानात् । भगवतः कर्माद्याधारत्वज्ञानायाधेयभूतकर्मादिस्वरूपं वेदेन प्रतिपाद्यत **इति काशकृत्स्नाचार्यो** मन्यत इत्यर्थः । अनेकाधिकारिकत्वान्मतानां न विरोध इति ध्येयम् ।।८।।

।। प्रकृत्यधिकरणम् ।। ६ ।।

## २४. ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ

ईश्वरः न केवलं पुल्लिङ्गाभिधेयः किन्तु **प्रकृतिः** । सैषा प्रकृतिरित्याद्युक्तप्रकृत्यादिस्त्रीलिङ्गशब्दवाच्यश्च भवति । कुतः? एवं सत्येव **प्रतिज्ञादृष्टान्तानुपरोधात्** हन्तैतमिति प्रतिज्ञायाः यथेति नदीसमुद्रदृष्टान्तस्य चानुपरोधात् अविरोधात् । अन्यथा तद्विरोधः स्यादित्यर्थः ।। १ ।।

## २५. ॐ अभिध्योपदेशाच्च ॐ

**अभिध्यायाः** ईश्वरेच्छायाः । **उपदेशात्** 'मायान्तु'[१] इति श्रुतौ प्रकृतिशब्दवाच्यत्वोक्तेश्च इच्छाभिन्नेश्वरस्यापि तच्छब्दवाच्यत्वाच्चेत्यर्थः ।। २ ।।

## २६. ॐ साक्षाच्चोभयाम्नानात् ॐ

१. '**मायां तु** प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे. ४–१०)

**चः** अवधारणे। **साक्षात्** द्वारमन्तरेणैव। **उभयाम्नानात्** 'एषस्त्र्येष पुरुषः'[१] इति वाक्येन प्रकृतिपुरुषोभयशब्दवाच्यत्वाभिधानात् ईश्वरस्य प्रकृत्यादि-शब्दवाच्यत्वमावश्यकमित्यर्थः ॥ ३ ॥

## २७. ॐ आत्मकृतेः परिणामात् ॐ

प्रकृति**परिणामं** विधाय तत्प्रेरणाय। **आत्मकृतेः** स्वस्य बहुधाकरणात् प्रकृति-शब्दवाच्यो विष्णुरेवेत्यर्थः ॥ ४ ॥

## २८. ॐ योनिश्च हि गीयते ॐ

**हि** यस्मात्। ईश्वरः 'यद्भूतयोनिम्'[२] इति श्रुत्या **योनिः** स्वदेहादेवापत्योत्पादकश्च **गीयते** प्रतिपाद्यते। तस्मात् प्रकृत्यादिस्त्रीलिङ्गशब्दवाच्य इत्यर्थः ॥ ५ ॥

॥ एतेन सर्वे व्याख्याताधिकरणम् ॥ ७ ॥

## २९. ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ

**एतेन** पूर्वोक्तहेतुनैव। **सर्वे** शून्यादिशब्दाः। **व्याख्याताः** मुख्यतो भगवद्वाचिन एवेत्यर्थः। एतदध्यायादिमारभ्यान्तमुक्तस्यार्थस्य इत्थमेवेत्यवधारणार्थ-मध्यायान्ते द्विरुक्तिः ॥ १ ॥

**इति श्रीजगन्नाथयतिकृतायां सूत्रदीपिकायां**
**प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥**

**॥ इति प्रथमाध्यायः समाप्तः ॥**

—o—

१. 'एषस्त्र्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽ-न्तः परमः पराद् विश्वरूपः' (पैङ्गिश्रुतिः)

२. 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं.१.१.६)

# परिशिष्टम् – १

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

॥ ह ॥



****

# परिशिष्टम् – २

## द्वैतविशिष्टाद्वैताद्वैतदर्शनानुसारेणाधिकरणसूत्रसङ्ख्यासूचिका

### अथ प्रथमाध्यायस्य प्रथमः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. जिज्ञासाधिकरणम् | १ | १. जिज्ञासाधिकरणम् | १ | १. जिज्ञासाधिकरणम् | १ |
| २. जन्माधिकरणम् | १ | २. जन्माधिकरणम् | १ | २. जन्माधिकरणम् | १ |
| ३. शास्त्रयोनित्वाधिकरणम् | १ | ३. शास्त्रयोनित्वाधिकरणम् | १ | ३. शास्त्रयोनित्वाधिकरणम् | १ |
| ४. समन्वयाधिकरणम् | १ | ४. समन्वयाधिकरणम् | १ | ४. समन्वयाधिकरणम् | १ |
| ५. ईक्षत्यधिकरणम् | ७ | ५. ईक्षत्यधिकरणम् | ८ | ५. ईक्षत्यधिकरणम् | ७ |
| ६. आनन्दमयाधिकरणम् | ८ | ६. आनन्दमयाधिकरणम् | ८ | ६. आनन्दमयाधिकरणम् | ८ |
| ७. अन्तःस्थत्वाधिकरणम् | २ | ७. अन्तरधिकरणम् | २ | ७. अन्तरधिकरणम् | २ |

| | | | | | |
|---|---|---|---|---|---|
| ८. आकाशाधिकरणम् | १ | ८. आकाशाधिकरणम् | १ | ८. आकाशाधिकरणम् | १ |
| ९. प्राणाधिकरणम् | १ | ९. प्राणाधिकरणम् | १ | ८. प्राणाधिकरणम् | १ |
| १०. ज्योतिरधिकरणम् | १ | १०. ज्योतिरधिकरणम् | ४ | १०. ज्योतिश्चरणाधिकरणम् | ४ |
| ११. छन्दोऽभिधानाधिकरणम् | ३ | ११. इन्द्रप्राणाधिकरणम् | ४ | ११. प्रतर्दनाधिकरणम् | ४ |
| १२. पादान्त्यप्राणाधिकरणम् | ४ | | | | |
| **आहत्य सूत्राणि** | ३१ | | ३२ | | ३१ |

## अथ द्वितीयः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| **अधिकरणानि** | **सू.सं** | **अधिकरणानि** | **सू.सं** | **अधिकरणानि** | **सू.सं** |
| १. सर्वगतत्वाधिकरणम् | ८ | १. सर्वत्र प्रसिद्ध्यधिकरणम् | ८ | १. सर्वत्र प्रसिद्ध्यधिकरणम् | ८ |
| २. अत्तृत्वाधिकरणम् | २ | २. अत्त्रधिकरणम् | ४ | २. अत्त्रधिकरणम् | २ |
| ३. गुहाधिकरणम् | २ | ३. अन्तराधिकरणम् | ६ | ३. गुहाधिकरणम् | २ |

| | | | | | |
|---|---|---|---|---|---|
| ४. अन्तराधिकरणम् | ५ | ४. अन्तर्याम्यधिकरणम् | ३ | ४. अन्तराधिकरणम् | ५ |
| ५. अन्तर्याम्यधिकरणम् | ३ | ५. अदृश्यत्वादिगुणकाधिकरणम् | ३ | ५. अन्तर्याम्यधिकरणम् | ३ |
| ६. अदृश्यत्वाधिकरणम् | ३ | ६. वैश्वानराधिकरणम् | ९ | ६. अदृश्यत्वाधिकरणम् | ३ |
| ७. वैश्वानराधिकरणम् | ९ | | | ७. वैश्वानराधिकरणम् | ९ |
| आहत्य सूत्राणि | ३२ | | ३३ | | ३२ |

## अथ तृतीयः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. द्युभ्वाद्यधिकरणम् | ७ | १. द्युभ्वाद्यधिकरणम् | ६ | १. द्युभ्वाधिकरणम् | ७ |
| २. भूमाधिकरणम् | २ | २. भूमाधिकरणम् | २ | २. भूमाधिकरणम् | २ |
| ३. अक्षराधिकरणम् | ३ | ३. अक्षराधिकरणम् | ३ | ३. अक्षराधिकरणम् | ३ |

| | | | | | |
|---|---|---|---|---|---|
| ४.सदधिकरणम् | १ | ४. ईक्षतिकर्माधिकरणम् | १ | ४. ईक्षतिकर्माधिकरणम् | १ |
| ५. दहराधिकरणम् | ८ | ५. दहराधिकरणम् | १० | ५. दहराधिकरणम् | ८ |
| ६. अनुकृत्यधिकरणम् | २ | ६. प्रमिताधिकरणम् | २ | ६. अनुकृत्यधिकरणम् | २ |
| ७. वामनाधिकरणम् | २ | ७. देवताधिकरणम् | ५ | ७. प्रमिताधिकरणम् | २ |
| ८. देवताधिकरणम् | ८ | ८. मध्वधिकरणम् | ३ | ८. देवताधिकरणम् | ८ |
| ९. अपशूद्राधिकरणम् | ५ | ९. अपशूद्राधिकरणम् | ७ | ९. अपशूद्राधिकरणम् | ५ |
| १०.कम्पनाधिकरणम् | १ | १०. प्रमिताधिकरणशेषः | २ | १०.कम्पनाधिकरणम् | १ |
| ११.ज्योतिरधिकरणम् | १ | ११. अर्थान्तरत्वादि-व्यपदेशाधिकरणम् | ३ | ११.ज्योतिरधिकरणम् | १ |
| | | | | १२.अर्थान्तरत्वादि-व्यपदेशाधिकरणम् | १ |
| १२.आकाशाधिकरणम् | १ | | | | |
| १३. सुषुप्त्यधिकरणम् | १ | | | १३.सुषुप्त्युत्क्रान्त्यधिकरणम् | २ |
| १४. ब्राह्मणाधिकरणम् | १ | | | | |
| आहत्य सूत्राणि | ४३ | | ४४ | | ४३ |

अथ चतुर्थः पादः

| माध्वभाष्ये | | रामानुजभाष्ये | | शाङ्करभाष्ये | |
|---|---|---|---|---|---|
| अधिकरणानि | सू.सं | अधिकरणानि | सू.सं | अधिकरणानि | सू.सं |
| १. आनुमानिकाधिकरणम् | ९ | १. आनुमानिकाधिकरणम् | ७ | १. आनुमानिकाधिकरणम् | ७ |
| २. ज्योतिरुपक्रमाधिकरणम् | २ | २. चमसाधिकरणम् | ३ | २. चमसाधिकरणम् | ३ |
| ३. नसङ्ख्योपसङ्ग्रहाधिकरणम् | ३ | ३. सङ्ख्योपसङ्ग्रहाधिकरणम् | ३ | ३. नसङ्ख्योपसङ्ग्रहाधिकरणम् | ३ |
| ४. आकाशाधिकरणम् | १ | ४.कारणत्वाधिकरणम् | २ | ४. कारणत्वाधिकरणम् | २ |
| ५. समाकर्षाधिकरणम् | ८ | ५. जगद्वाचित्वाधिकरणम् | ३ | ५. जगद्वाचित्वाधिकरणम् | ३ |
| ६. प्रकृत्यधिकरणम् | ५ | ६. वाक्यान्वयाधिकरणम् | ४ | ६. वाक्यान्वयाधिकरणम् | ४ |
| ७. एतेनसर्वेव्याख्याताधिकरणम् | १ | ७. प्रकृत्यधिकरणम् | ६ | ७. प्रकृत्यधिकरणम् | ५ |
| | | ८. सर्वव्याख्यानाधिकरणम् | १ | ८. सर्वव्याख्यानाधिकरणम् | १ |
| आहत्य सूत्राणि | २९ | | २९ | | २८ |

# परिशिष्टम् – ३

## श्रीविजयीन्द्रतीर्थकृतब्रह्मसूत्रन्यायसङ्ग्रहः

## (प्रथमाध्यायस्य प्रथमपादादिचतुर्थपादान्तो भागः)

श्रीशं श्रीमध्वमौनीन्द्रानानम्याखिलसद्गुरून् ।
क्लृप्त्यर्थं क्रियते ब्रह्मसूत्रेषु न्यायसङ्ग्रहः ।। १ ।।

जीवान्यद् ब्रह्म जिज्ञास्यं सृष्ट्याद्यष्टविधायि यत् ।
शास्त्रैकगम्यं तद् ब्रह्मोपक्रमादिसमन्वयात् ।। २ ।।

नावाच्यमीक्षणीयत्वाद् ब्रह्मानन्दमयादिकम् ।
अन्तस्स्थमब्धिचारादेराकाशोऽनन्ततादितः ।। ३ ।।

प्राणः श्रीलक्ष्म्यधीशत्वाज्ज्योतिः कर्णादिदूरतः ।
गायत्री त्राणगानादेः प्राणो देहरथादितः ।। ४ ।।

द्वादशाद्याद्याङ्घ्रिनयास्तद्द्वितीये तु सप्त ते ।
सर्वगो(त्र) ब्रह्मशब्दादेरत्ता सर्वादनाद्धरिः ।। ५ ।।

ऋतं पिबन्तौ हृत्स्थत्वादमृतत्वादितोऽन्तरः ।
अन्तर्याम्यन्तरादेः सोऽदृश्यादिः परविद्यतः ।। ६ ।।

वैश्वानरश्चात्मशब्दाद् द्युभ्वादेराश्रयोऽप्यतः ।
भूमा पूर्णसुखादेरक्षरमम्बरपूर्वधृत् ।। ७ ।।

सदीक्षितृत्वाद् हृत्खस्थो हतपाप्मत्वपूर्वकैः ।
कथञ्चित्त्वानुकूल्येन ग्राह्यं सर्वप्रकाशनात् ।। ८ ।।

ईशानो वामनश्रुत्या देवा विद्याधिकारिणः ।
नासंस्कारादितः शूद्राः कम्पनाद्वज्रमीश्वरः ।। ९ ।।

ज्योतिस्सावधृतिश्रुत्याऽऽकाशो नामाद्यभावतः।
स्वप्नादिदृगसङ्गत्वाद् ब्राह्मणः पतिपूर्वतः॥ १० ॥

नयाश्चतुर्दशाऽऽद्यस्य तृतीये षट् तदुत्तरे।
अव्यक्तं तत्स्वतन्त्रत्वाज्ज्योतिस्ता वा इति श्रुतेः॥ ११ ॥

रूपनानात्वतः पश्चावान्तरं कारणं च सः।
प्रकृतिश्च प्रतिज्ञादेः शून्यादिश्चोक्तहेतुतः॥ १२ ॥

आद्याध्यायगता न्यायाः धीगाः (३९) सूत्राणि मालयाः। (१३५)।

जिज्ञास्ये जीवभेदायानन्तसद्गुणलक्षणम्॥ १३ ॥

ब्रह्मेत्युक्तं तत्प्रसिद्ध्यै जन्माद्यस्येति सूत्रितम्।
अनतिव्याप्तये तस्य शास्त्रयोनित्वमीरितम्॥ १४ ॥

तल्लक्षणद्वयोपेते मुख्याऽशेषागमार्थता।
समोक्तोपक्रमादिस्तद्धेतुस्तुर्ये प्रतिश्रुतः॥ १५ ॥

समर्थसिद्ध्यै वाच्यत्वगतिसाम्ये निरूपिते।
पञ्चमेऽथ प्रतिज्ञातसमन्वयसमर्थनम्॥ १६ ॥

शब्दश्चतुर्विधास्तत्रान्यत्रान्यत्रैव चोभयोः।
प्रसिद्धा इति ते सर्वे नामलिङ्गात्मना द्विधा॥ १७ ॥

तत्रप्रसिद्धो विष्ण्वैकनिष्ठो विष्ण्वादिगीर्यथा।
तदेकनिष्ठतासिद्धेर्न कार्यस्तत्समन्वयः॥ १८ ॥

यत्राऽन्यवृत्तिरेकैव समन्वयविरोधिनी।
उभयत्र प्रसिद्धं तदक्षरादिवचो यथा॥ १९ ॥

ब्रह्मावृत्त्यन्यवृत्ती द्वे विरोधिन्यौ समन्वये ।
यत्राऽन्यत्र प्रसिद्धं तदिन्द्राकाशादिगीर्यथा ।। २० ।।

उक्तद्वयं ब्रह्मवृत्तौ बाधकं च त्रयं यदा ।
अन्यत्रैव प्रसिद्धं तद्दुःखिबद्धादिगीर्यथा ।। २१ ।।

आपातरूढिरहितधर्मद्वारा च धर्मिगम् ।
लिङ्गमन्यत् ततो नामान्तर्यामीन्द्रादिगीर्यथा ।। २२ ।।

अन्यत्रैव प्रसिद्धानां दुःशकावगतित्वतः ।
सर्वाधिकारवैधुर्याच्चान्त्याङ्घ्रौ तत्समन्वयः ।। २३ ।।

अन्येष्वपि महामल्लभीरुभङ्गनयात्कृतः ।
आद्येऽन्यत्र प्रसिद्धानां नाम्नां तत्रापि मुख्यतः ।। २४ ।।

अमुख्यत्वादन्यगतलिङ्गानां तु द्वितीयगः ।
उभयत्र प्रसिद्धानां नामलिङ्गात्मनामपि ।। २५ ।।

समन्वयस्तृतीयेऽङ्घ्रौ कृतोऽत्रैव प्रसङ्गतः ।
देवशूद्राधिकारैतदभावौ तु विचारितौ ।। २६ ।।

छन्दोभिधसमाकर्षौ द्वावन्तर्ग(र्गु)णकौ नयौ ।। २७ ।।

**इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे विजयीन्द्रयतिविरचिते प्रथमोऽध्यायः ।। १ ।।**

*****

# परिशिष्टम् - ४

## श्रीधीरेन्द्रयतिविरचितः विषयवाक्यसङ्ग्रहः

### अथ प्रथमाध्यायः

### प्रथमः पादः

श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिनः ।
श्रीरामकृष्णव्यासश्रीहयास्यान् प्रणमाम्यहम् ॥ १ ॥

श्रीमध्वतन्त्रव्याख्याकृज्जयराजार्यपूर्वकान् ।
श्रीराघवेन्द्रवादीन्द्रवसुधेन्द्रान् नतोऽस्म्यहम् ॥ २ ॥

श्रीव्यासो ब्रह्ममीमांसां चक्रे सूत्रगणात्मिकाम् ।
सा चतुर्लक्षणी तत्र चत्वारः प्रतिलक्षणम् ॥ ३ ॥

पादाः प्रसिद्धा द्वाविंशत्यधिकद्विशतं नयाः ।
तत्र सर्वाधिकरणेषु भाष्यटीकास्फुटान्यपि ॥ ४ ॥

वक्ष्ये विषयवाक्यानि तदुक्त्या ज्ञापितान्यहम् ।
विजिज्ञासस्वेति वाक्यं जिज्ञासानयगं स्मृतम् ॥ ५ ॥

जन्माधिकरणस्योक्तं तद् ब्रह्मेति तदुत्तरम् ।
यतो वेत्यादि तत्पूर्वं शास्त्रयोनिनयस्य च ॥ ६ ॥

समन्वयस्यौपनिषदः पुरुष इत्यादिकस्तथा ।
नावेदविच्चेति वाक्यद्वयं विषयदर्शकम् ॥ ७ ॥

नामानि सर्वाणि यमाविशन्तीत्यादिकं तथा ।
इहेक्षतिनये गम्यं टीकादौ विषयोक्तितः ॥ ८ ॥

अन्तरात्माऽऽनन्दमय इत्यानन्दमये नये ।
उपलक्षणयाऽऽनन्दमयशब्द उदाहृतः ॥ ९ ॥

अन्तःप्रविष्टं कर्तारमित्यन्तःस्थनयस्य तु ।
आकाश इति होवाचेत्याकाशाख्यनयस्य तु ॥ १० ॥

तद्वै त्वं प्राणोऽभव इति प्राणनयस्य हि ।
आद्यज्योतिर्नयस्येदं ज्योतिरित्युदितं वचः ॥ ११ ॥

गायत्री वा इदं सर्वं गायत्र्यधिकृतेरपि ।
चक्षुः श्रोत्रं मनः प्राण इति प्राणनयेऽन्तिमे ॥ १२ ॥

**॥ इति प्रथमाध्यायस्य प्रथमः पादः ॥**

## द्वितीयः पादः

सर्वभूतेष्वेतमिति वाक् सर्वत्रप्रसिद्धके ।
सर्वं वा अत्तीति वाक्यमत्ताधिकरणस्य तु ॥ १ ॥

ऋतं पिबन्तावित्याद्यं गुहाधिकरणीयकम् ।
यः एषोऽन्तरक्षिणीति त्वन्तर्नयगतं वचः ॥ २ ॥

एष त आत्माऽन्तर्यामीत्यन्तर्यामिनयस्य हि ।
अदृश्यत्वनये यत्तदद्रेश्यमिति भाषितम् ॥ ३ ॥

यस्त्वेतमेव प्रादेशमात्रमित्यादिकं वचः ।
वैश्वानरनयस्यैतद्विषयप्रतिपादकम् ॥ ४ ॥

**॥ इति प्रथमाध्यायस्य द्वितीयः पादः ॥**

## तृतीयः पादः

यस्मिन् द्यौः पृथिवीत्येतद् द्युभ्वाद्यायतने नये।
यो वै भूमेति यद्वाक्यं भूमाधिकरणस्य तु ॥ १ ॥

एतद्वैतदक्षरं गार्गीत्यन्तरनयस्य च।
सदेव सौम्येति यद्वाक्यं सन्नये विषयार्पकम् ॥ २ ॥

दहरं पुण्डरीकं वेश्मेत्याद्यं दहरे नये।
तदेतदिति मन्यन्त इत्याद्यनुकृतौ नये ॥ ३ ॥

अङ्गुष्ठमात्रमित्यादि शब्दादेवेति सन्नये।
विश्वे देवा इति वचो देवतानयगं मतम् ॥ ४ ॥

पठेद्वेदानिति वचो ह्यपि शूद्रनये मतम्।
महद्भयं वज्रमिति वाक्यं कम्पनसन्नये ॥ ५ ॥

प्राणे हृद्यन्तरिति ज्योतिर्दर्शनके नये।
आकाशोऽर्थान्तरत्वादि ह्याकाशे च प्रसिद्धवाक् ॥ ६ ॥

स यत्तत्रेत्यादि वाक्यमसङ्गत्वनयस्य हि।
महिमा ब्राह्मणस्येति वचः पत्यादिशब्दके ॥ ७ ॥

॥ इति प्रथमाध्यायस्य तृतीयः पादः ॥

## चतुर्थः पादः

महतः परमव्यक्तमिति वागानुमानिके।
वसन्ते ज्योतिषेत्यादिनये ज्योतिरुपक्रमे ॥ १ ॥

सङ्ख्योपसङ्ग्रहनये पञ्च पञ्चजना इति।
आकाशाद्वायुरित्येतत्कार्यकारणसन्नये ॥ २ ॥

सर्वे वेदा इति वचो समाकर्षनयस्य तु ।
सैषा प्रकृतिरित्याद्यं वाक्यं तु प्रकृतौ नये ।। ३ ।।

एतेन सर्वे व्याख्याता इत्यध्यायान्तिमे नये ।
असदेवेति तुच्छेनेत्याद्यं विषयदर्शकम् ।। ४ ।।

**।। इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे प्रथमाध्यायस्य चतुर्थः पादः ।।**

# परिशिष्टम् – ५

## श्री सुधीन्द्रतीर्थविरचिता श्रीमद्ब्रह्मसूत्राधिकरणरत्नमाला

### ।। प्रथमाध्यायः ।।

### १. अन्यत्रप्रसिद्धनामपादः

ज्ञानार्थमर्थितः श्रीशो ब्रह्मरुद्रादिभिः सुरैः ।
व्यासो भूत्वा समुत्सन्नान् व्यञ्जयन् व्यभजच्छ्रुतीः ।।

तदर्थसन्निर्णयाय शास्त्रं शारीरकाह्वयम् ।
चक्रे चतुर्लक्षणेतं कलाचरणसंयुतम् ।।

शतद्वयेन विंशत्या द्वाभ्यामपि समन्वितम् ।
नयानि (नयानां) भूषणैः सूत्रैः संयुतं भगवान् प्रभुः ।।

तत्र शास्त्रारम्भणीयत्वोपयुक्ततया नये ।
प्रथमे शास्त्रजिज्ञासाकार्यतामाह शास्त्रकृत् (।। १ ।। )

द्वितीये तु विचार्यस्य हरेर्लक्षणमब्रवीत् (।। २ ।।)

तदतिव्याप्तिनिर्हृत्यै मानमाह तृतीयके (।। ३ ।।)

ततः पुनरतिव्याप्तिनिरासायैव मापतेः ॥
कारणत्वेन शास्त्रैकयोनित्वं समसीषधत् (॥ ४ ॥)

संशब्दप्रोक्तवाच्यत्वं सर्वशास्त्रप्रमाणताम् ।
अपीक्षतिनये प्राह पञ्चाधिकरणीति हि (॥ ५ ॥)

ततस्त्वध्यायशेषस्थ (स्तु) प्रतिज्ञातसमन्वयम् ।
प्रवृत्तः संस्पष्टयितुं तत्राऽऽनन्दमये नये ॥
अन्यत्रगानां नाम्नां तु गुणिसामान्यवाचिनाम् ।
गुणसंवाचकानां च हरावाह समन्वयम् (॥ ६ ॥)
ततोऽन्तःस्थत्वसल्लिङ्गद्वारा विष्णौ समन्वयम् ।
अधिदैवगतेन्द्रादिसर्वनाम्नां ततः परम् (॥ ७ ॥)

अधिभूतगताकाशपूर्वनामततेस्ततः (॥ ८ ॥)

अध्यात्मगप्राणपूर्वनाम्नामाह समन्वयम् ।
दशमे सूक्तगाशेषज्योतिरादिपदावलेः ।
समन्वयं हरावाह (॥ १० ॥)

एकादशे नु नयेऽब्रवीत् ॥
अधिवेदगगायत्रीपूर्वनामततेर्हरौ ॥

समन्वयम् (॥ ११ ॥) द्वादशेऽन्यप्रापकैर्बहुभिर्नये ॥
लिङ्गैर्युतानां नाम्नां तु हरावाह समन्वयम् (॥ १२ ॥)
इति प्रथमपादेऽस्मिन्नया द्वादश कीर्तिताः ॥

## २. ॥ अन्यत्रप्रसिद्धलिङ्गपादः ॥

अथाऽन्यत्रगलिङ्गानामाह विष्णौ समन्वयम् ।
पादे द्वितीये तत्राऽऽद्ये नये भावात्मकस्य तु ।
सर्वत्रावस्थितत्वस्य लिङ्गस्याऽऽह समन्वयम् (॥ १ ॥)

सर्वसंहर्तृत्वरूपक्रियालिङ्गसमन्वयम् ।
नये द्वितीये प्रोवाच (॥ २ ॥) तृतीये तु नयेऽब्रवीत् ॥
सत्कर्मफलभोक्तृत्वक्रियालिङ्गसमन्वयम् (॥ ३ ॥)

चक्षुरन्तःस्थितत्वाख्यभावयुक्तस्य तत्परे ।
रतिक्रियात्मलिङ्गस्य नये प्राह समन्वयम् (॥ ४ ॥)
पञ्चमेऽन्तस्स्थितत्वाख्यभावयुक्तस्य माधवे ।
नियन्तृत्वक्रियारूपलिङ्गस्याऽह समन्वयम् (॥ ५ ॥)

षष्ठेऽभावात्मलिङ्गस्य हरौ प्राह समन्वयम् (॥ ६ ॥)

बहुलिङ्गसमायुक्ता या हि वैश्वानरश्रुतिः ।
तस्याः समन्वयं प्राह हरावन्त्ये हि सूत्रकृत् (॥ ७ ॥)
इति सप्त नयाः पादे द्वितीयेऽस्मिन् प्रकीर्तिताः ॥

## ३. ॥ उभयत्रप्रसिद्धलिङ्गनामपादः ॥

उभयत्रप्रसिद्धानां लिङ्गनाम्नां समन्वयम् ।
शब्दानामाह पादेऽस्मिन् हरौ तत्राऽदितो नये ॥
सर्वाश्रयत्वलिङ्गस्य (॥ १ ॥)

भूमनाम्नो द्वितीयके ।
समन्वयं हरावाह (॥ २ ॥)

तृतीये त्वक्षरश्रुतेः (॥ ३ ॥)

तुर्ये समन्वयं प्राह सृष्टिस्थानगसच्छ्रुतेः (।। ४ ।।)

हृत्पद्मस्थत्वलिङ्गस्य तदन्तरनये हरौ (।। ५ ।।)

आनुकूल्येन यद् गृह्यमाणत्वं तस्य केशवे।
षष्ठे नये तु लिङ्गस्यावदद् व्यासः समन्वयम् (।। ६ ।।)

सप्तमे त्वीशाननाम्नो हरावाह समन्वयम् (।। ७ ।।)

वेदविद्यासु देवानामधिकारोऽस्ति सर्वशः।।
इत्यष्टमे नये प्राह प्रसङ्गादेव सूत्रकृत् ।। ८ ।।

नवमे तदभावं च शूद्राणामाह सूत्रकृत् ।। ९ ।।

दशमे वज्रनाम्नस्तु हरावाह समन्वयम् ।। १० ।।

एकादशनये प्राह ज्योतिर्नाम्नः समन्वयम् ।। ११ ।।

तदुत्तरनये प्राहाऽऽकाशनाम्नः समन्वयम् ।। १२ ।।

त्रयोदशे तु स्वप्नादिद्रष्टृत्वस्य समन्वयम् ।।

लिङ्गस्य (।। १३ ।। ) भगवानाह चरमे ब्रह्मणः श्रुतेः (।। १४ ।। )

इत्थं चतुर्दश नयाः पादे प्रोक्तास्तृतीयके ।।

### ४. ।। अन्यत्रैवप्रसिद्धलिङ्गनामपादः ।।

अन्यत्रैव प्रसिद्धानाम् (।। १ ।।) द्विविधानां समन्वयम्।
शब्दानां भगवानाह विष्णौ पादे चतुर्थके ।।
ऐश्वर्यरोधिदुःखित्वाद्यर्थशब्दसमन्वयम् ।।
भगवान् सूत्रकृत् तत्र प्राह प्रथमके नये (।। २ ।।)

द्वितीये सर्वशब्दानां पदवर्णादिरूपतः।
समन्वयं हरावाह (।। ३ ।।)तृतीये तु नये हरिः ।।

बहुत्ववाचिशब्दानां चतुर्थे सूत्रकृन्नये ।।
अवान्तरं कारणत्वं यल्लिङ्गं तस्य वाऽब्रवीत् ।।
तादृशाकाशादिनाम्नामथवाऽऽह समन्वयम् (।। ४ ।।)

न्यायभेदेन सर्वेषां शब्दानामाह पञ्चमे (।। ५ ।।)

पुनः समन्वयं विष्णौ षष्ठे स्त्रीलिङ्गिनामपि (।। ६ ।।)

निषेधवाचिनां नाम्नां सप्तमे तु समन्वयम् (।। ७ ।।)

आह तुर्ये तु चरणे नयाः सप्त प्रकीर्तिताः ।।
अनन्तशब्दवाच्यत्वात्सिद्धोऽनन्तगुणो हरिः ।।

**।। इति प्रथमोऽध्यायः ।।**

# परिशिष्टम् – ६

## ब्रह्मसूत्रभाष्योदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका

॥ आ ॥

## ॥ ए ॥

## ॥ ओ + औ ॥



## ॥ क ॥



## ॥ ग + घ ॥



## ॥ च + ज ॥

## ॥ त ॥

॥ द + ध ॥

## ॥ न ॥

॥ प ॥

## ॥ ब ॥



## ॥ भ ॥



## ॥ म ॥

॥ य ॥

॥ य ॥

॥ र + ल ॥



॥ व ॥

॥ श ॥

॥ स ॥

॥ ह ॥



*****